

श्रीस्वामिनारायणो विजयतेतराम्

श्रीस्वामिनारायणभगवच्चरणकमलोपासकतत्सम्प्रदायीयसकलनियमनियन्त्रण-
शासनसमर्थसर्वविद्यावारिधियोगकलानिधि-यतीन्द्र-श्रीमत्-

सद्गुरुश्रीगोपालानन्दस्वामिविरचितः

# श्रीहरिस्वरूपनिर्णयः

दार्शनिकपञ्चानन-षड्दर्शनाचार्य-नव्यन्यायाचार्य-सांख्ययोगवेदान्त-
मीमांसातीर्थ-काव्यकुशल-वैष्णवविद्वत्सार्वभौम-
श्रीस्वामिनारायणसम्प्रदायसकलहार्दाभिज्ञ-
श्रीकृष्णवल्लभाचार्यस्वामिविरचित-

श्रीसत्सङ्गभाष्यसहितः


णमन्दिरम्
सौराष्ट्रः,

२०२६ ]    विजयादशमी

# समर्पणम्

'सत्संगभाष्यं भ्रमजांऽगनाशकृत् ,
मत्साक्षिदेश्यं विरचय्य निर्णये ।
हरेः स्वरूपेऽर्पितवानहं प्रभौ
श्रीकृष्णयुग्वल्लभदेशिकः स्वयम् ॥ १ ॥

श्रीस्वामिनारायणमन्दिरम्
जूनागढ, सौराष्ट्रः,

# किञ्चिद् मन्तव्यम्



'नोद्धवोण्वपि मन्न्यूनः' (भाग. ३।४।३१) इति परमात्मनः श्रीकृष्णादन्यूनेनोद्धवाऽभिन्नेन श्रीमद्रामानन्दस्वामिना सुस्थापिते वृषात्मजेन श्रीहरिणा सुसंवर्धिते समीकृते च श्रीमुक्तानन्दस्वामिप्रभृतिमुनिगणैः सुरक्षिते सुप्रचारिते चाऽस्मिन्नुद्धवसम्प्रदायापरनाम्नि श्रीस्वामिनारायणसम्प्रदाये श्रद्धावतां भगवद्भक्तानां महती सङ्ख्या प्रथमत एव वर्तते। सर्वेऽप्येते परम्परया प्राप्ते परिशुद्धे धर्मवैराग्यमाहात्म्यज्ञानपूर्वकैकान्तिकभक्तिमार्गप्रतिष्ठिते श्रीहरिस्वरूपनिर्णये निःसंशया एव, किन्तु साम्प्रतिके काले केचिदविपश्चित सम्प्रदायशुद्धं शास्त्रसम्मतञ्च सिद्धान्तमगणयित्वैव श्रीहरिस्वरूपविषये कुबुद्धिकल्पितान् विकल्पकल्कान् विकत्थमानाः क्लिश्यन्ति स्वय क्लेशयन्ति च जनान्। तेषाञ्चेयं पारस्परिकघृणेर्ष्यादुर्भावनादीनां प्रसवित्री स्वात्मघातिनी वैतण्डिकी प्रवृत्तिरतीव शोचनीया वर्तते।

न केवलमस्मिन् सम्प्रदाय एवेयं रीतिः, अपि तु बहुशाखाप्रशाखे सर्वाश्रये साक्षात् परम्परया वा वेदानुगे कल्पद्रुकल्प आर्यसम्मते 'हिन्दू' इत्यपरनामके समग्रे धर्मेऽप्यस्त्येव, सा चैहिकामुष्मिकश्रेयोर्थिभिः सुज्ञैः सर्वथा दूरत एव परित्याज्या। यतः सर्वथा समृद्धः सम्पूर्णश्चाप्ययं भारतीयो धर्मो वैदेशिक-इसलाम-ईसाई-प्रमुखविधर्मिकृतचातुर्दिश्येनाऽऽक्रमणेनाऽऽक्रान्तः सन् पीड्यमान इव प्रतीयते। अतः स्वसंस्कृतिस्निग्धान् सद्धर्मानुरागिणो भारतीयान् विदुषः प्रार्थये यत् 'सर्वैरपि स्वस्वान्तर्विरोधं परित्यज्य सद्धर्मस्याऽस्य संरक्षणाय सुप्रचाराय चैकात्म्येन सुमहान् प्रयत्नः कार्यः' इति।

तदर्थञ्च प्रकाशितः सभाष्योऽय श्रीहरिस्वरूपनिर्णयाख्यः प्रबन्धो न केवल स्वामिनारायणसम्प्रदायानुयायिनामुपकारक, किन्तु सर्वेषामपि मूर्त्त्युपासकानां भगवदवतारभक्ताना तुल्य एवेति मन्ये। अपरमपि निरतिशयितं महत्त्वं प्रबन्धस्याऽस्येत एवास्ति, यतो भगवच्छ्रीस्वामिनारायणस्य प्रमुखसच्छिष्यैर्योगकलानिधिभिर्योगीन्द्रश्रीगोपालानन्दमुनिभिर्विरचितो वैष्णवविद्वत्सार्वभौमैः पण्डितप्रवरैः श्रीकृष्णवल्लभाचार्यमहाभागैः सत्सङ्गभाष्येण भाषितश्चेति। भाष्यकाराणां सुनाम तु पूर्वमेव काश्यां विद्वत्संसदि सुविदितमस्ति। अतो गौरवास्पदस्य ग्रन्थरत्नस्याऽस्य प्रकाशनेनाहमतीवाऽऽनन्दमनुभवामीति शम।

हरिप्रकाशशास्त्री

नव्ये न्याये च सांख्ये श्रुतिशिरसि च योगेऽन्यशास्त्रेषु योऽस्ति
मीमांसायां च काव्ये नवकृतिरचने पारगो दर्शनेषु ।
वाग्धारायां विमर्शे विबुधसदसि वैशेषिके लेखने च
निष्णातश्चेतिहासे जयति स निगमे तन्त्रशास्त्रे पुराणे ॥ १ ॥

न्यायाचार्य, शास्त्री स्वामीजी



श्रीकृष्णवल्लभाचार्यजी.

श्रीकृष्णो वल्लभाचार्य इह सुरनिभश्चाऽर्हणार्हः शुभांऽको
विद्वान् ज्ञाने प्रवीणो बुधपरिषदि काश्यां च यो लब्धकीर्तिः ।
मूर्धन्यं यत्सुधासिन्धुरसमरचयद् ब्रह्मरासायनाख्यं
भाष्यं वै दर्शनानां पुरुमततयो यत्र विश्रान्तिमापुः ॥ २ ॥
गोपालानन्दमुनिकृद्वार्ताः संस्कृतपद्यगाः ।
गुणातीतानन्दमुनिवार्ता जग्रन्थ संस्कृते ॥ ३ ॥
यश्चकाराऽन्यशास्त्राणि विविधानि मुदा हरेः ।
साम्प्रदायिकसिद्धान्तावेदकानि प्रसादतः ॥ ४ ॥
सोऽयं विराजते स्वामी स्वामिनारायणाऽऽश्रितः ।
साध्वाशीर्वादपीयूषाऽसीमपानप्रजीवनः ॥ ५ ॥

हरिप्रकाशशास्त्री

# “प्रस्तावना”



श्रुतिस्मृतिपुराणाद्यैः शास्त्रैरागमवेदिभिः ।
वर्ण्यते यत् परब्रह्म श्रीहरिं तमुपास्महे ॥ १ ॥

यस्य परपुरुषोत्तमस्य स्वरूपनिर्णये 'वेदा नो यान्ति पारम्' 'अथाऽत आदेशो नेति नेति' 'यतो वाचो निवर्तन्ते' इत्याद्या बह्वय श्रुतयः स्वाऽसामर्थ्यं कथयन्ति, तथापि यथा-कथञ्चिद् यावत्तया प्रवर्तन्ते तावत्तया स्वरूपम् उपक्रमन्तेऽवगच्छन्ति प्रतिपादयन्त्यपि च, अप्रापणतात्पर्यन्तु परमात्मनोऽपारगुणैश्वर्यचमत्कारशक्तिसामर्थ्यस्वरूपस्वरूपाऽवतरणकार्य-लीलाऽन्तर्यामित्वरूपाऽनुरूपभवनत्वसर्ववेदितृत्वसर्वप्रकाशकत्वादीनां निरवधिकनिरतिशयाऽ-पारतापरम् । ब्रह्मलोकनिवासी परमात्मा सच्चिदानन्दमूर्त्तरानन्दघनरसघनैकतत्वस्वरूपः सदैकस्वरूपसुमूर्तकिशोरवेषोऽसंख्यस्वसमानदिव्यप्रकाशघनानन्दसंभृतानादिसिद्धाऽसंख्यमुक्त-प्रसेवितचरणकमलो हिरण्यवर्णः सर्वसुवर्णवर्णं सर्वप्रकाशप्रदाता सर्वनियामकः सर्वान्तर्या-मिशक्तिधरः सर्वकर्मफलप्रदाता सर्वान्तरात्मतया सुसूक्ष्मतरोऽपि व्यवस्थितः श्रीहरिकृष्ण-परमात्माऽनादिनित्यसिद्धदिव्याकार आनन्दमात्रकरपादमुखोदरादिस्वरूपो वर्तते, स एव त्रिपाद्ब्रह्मलोकस्वामी चाप्येकपात्सृष्टिस्वामी जडचेतनशरीरी स्वयं सर्वावतारी व्यतिरेक्यपि सर्वान्वय्यपि धृतावतारो धृतदिव्यमानवाकारवेषोऽवतारस्वरूपो भक्तजनरमणार्थं लोकान्तर-नि श्रेयसार्थं तदंगभूतधर्मादिरक्षार्थं प्रार्थितसम्पत्त्यर्थं चावतरन्नवतारस्वरूपोऽपि सृष्टौ प्रविश्याऽपृथगपि पृथगिव सर्वजननयनगोचरो ग्राह्याकारः प्राकृत इव प्रकटीभूय विराजते विहरति चेष्टते उपदिशति मोक्षयति चाप्याश्रितान् , इत्येवं परब्रह्म परमात्मा स्वयं प्रतिसृष्टि प्राकट्यमाददान इदानीमप्येतस्यां सृष्टावात्मनः प्राकट्यं मानवाकारं गृह्णन् श्रीरामकृष्णकपि-लहरिवासुदेवपृथुदत्तात्रेयर्षभवामनपर्शुरामसनकादिनारदाद्यवतारस्वरूपात्मक स्वं सृष्टिजीवेभ्यः प्रददानोऽपि क्वचिदवतार्यैवापि स्वय स्वं निजैकान्तिकपरमभागवतसाध्यभक्तिमच्छरणाग-तेभ्योऽर्पयन् भूम्यादावास्ते । सकलजनसेवाऽर्हनरनाट्यानुकरणपरायणोऽस्मदादिदृग्गोचरो मानवादिसाजात्यमलंकुर्वाण· परोऽप्यपर इव दिव्योऽप्यदिव्य इवाऽमृतोऽपि मर्त्य इवाऽ-लौकिकोऽपि लौकिक इव निर्लिप्तोऽपि सुलिप्त इवाऽमायिकोऽपि मायिक इव सर्वज्ञोऽप्यस-

वंज्ञ इव सर्वात्माऽप्येकात्मैव यावच्छरीर्यप्येकशरीरीवैकावस्थोऽप्यनेकावस्थ इव निर्विषयोऽपि सर्वविषयोऽपि च क्षुद्रविषयीव व्यवस्थानो विराजते, अकालोऽपि कालं कवलयन्नपि काल-कवलतामाप्त इवेत्यानन्त्यमस्य यावद्विधत्वे नत्वियत्तेति जगु· श्रुतिस्मृतय । स एव परमात्मा भक्तिधर्मात्मजः श्रीहरिकृष्णसहजानन्दस्वामिनारायणादिनाम्नाऽवतारी स्वयमाविर्भूत· छप्पयाग्रामेऽयोध्याप्रान्ते, सोऽयं श्रीस्वामिनारायणभूतिरत्र सोऽस्ति त्वनादिनित्यसिद्धदिव्याकृतिरत्र च तत्राक्षरब्रह्मलोके चेत्यैक्यमेकस्य तस्य परमात्मनो द्वेधालभ्यस्यापि, एतदैक्य दिव्यसाकारमानवाकारयोरिति श्रीगोपालानन्दमुनिना **'श्रीहरिस्वरूपनिर्णये'** सदा-सिद्धमपि मननवृत्त्या शाब्दीभावनया साधितम्, श्रुतिस्मृतिपुराणेतिहासप्रमाणान्यत्रोपन्यस्तानि, एतस्य ग्रन्थस्य विशदं **'सत्संगभाष्यम्'** आवश्यक तन्मूलगतसर्वपदार्थवैशद्यद्योतकं विशिष्टताद्योतकं चेति, यत्र 'श्रीहरेरनादिसिद्धदिव्याकृतित्वम्, दिव्यत्वे मनुष्यत्वम्, मनुष्यत्वे दिव्यत्वम्, दिव्यत्वे पुनर्मनुष्यत्व' चेति श्रुत्यादिमूलकन्यायाद्यैर्विस्तृतं विविधसद्युक्तिभि साधित भवेत, यत्र परमात्मनः परिपूर्णत्व पुरुषविधत्वम् अक्षरसञ्चारित्वम् अक्षराऽवेद्यत्व प्रत्यक्षसार्वज्ञ्यं सृष्टिकारकमूर्तित्व महामहिमत्वं ब्रह्मपुरवासित्वं नित्यबहुचेतनान्तरेकनित्यसर्वकामपूरकत्वं सर्वात्मस्थत्वं सर्वप्रकाशित्वं दिव्यकिशोरवेषत्वं भक्तानुग्रहविग्रहवत्त्वमनिर्देश्यमूर्तित्वं रम्यदिव्याऽसिताकृतित्वं धीरदर्शनयोनित्वं पुरातनपुरुषत्व परज्योतिःसंभृताध्यातदीपत्वं जगज्जन्मस्थितिलयलीलत्वम् असुरमोहकप्राकृतदेहादिकत्वम् असख्यसूर्यादिभासत्व स्वधामदर्शकत्व मुनिजनदर्शनार्हत्वं कौन्तेयस्वकरूपदर्शकत्व सगुणनिर्गुणत्वं गुणाष्टकवत्त्व षडैश्वर्यवत्त्वं सत्यशौचाद्यसंख्यदिव्यगुणशालित्व वासुदेवादिव्यूहधर्तृत्व सर्वोपरिनियामकत्व सृष्टिकारकसंकल्पवत्त्वं हिरण्यवर्णपुरुषविधत्वं एकाऽद्वितीयत्वं सर्वात्मकत्व वटपत्रशायित्वं परब्रह्मत्वं त्रिकालास्तित्व सर्वथा विभुत्वं भूतसंघसंस्थानरहितत्व कालपुरुषप्रकृतिशक्तिकत्व दिव्यज्ञलभ्यमुक्तिकत्वम् अखण्डानन्दस्वरूपत्वं स्वयञ्ज्योतिष्ट्वं वेदप्रदातृत्वं परममहेश्वरत्व परमपतित्व त्रिविधकारणतावत्त्वं प्रत्यक्षप्राप्तस्वरूपात्मकत्व चेति श्रीगोपालानन्दस्वामिना 'श्रीहरिस्वरूपनिर्णये' विषयाः संगृहीताः, त एव विषया अन्येऽपि चानुगुणा अखिलग्रन्थोपकरणरूपास्तेऽपि भाष्ये विस्तृततया न्यायाद्युक्तिभिर्विशदीकृत्य प्रतिपादिता· भाषिताः संसाधिताश्च । भाष्ये विशेषतो मूलावलम्बनपराणि **व्याख्यानानि—** ग्रन्थनामनिरुक्ति·, आनन्दघनभगवन्निरुक्तिः विभूतिपिण्डाद्यनुपपत्ति·, अनादिनित्यसिद्धदिव्याकृतित्वाद्यानि, अनादिनित्यसिद्धाऽदिव्याकृतिभिन्नाऽऽकृतित्वं न वा, मायाकृतिभिन्नविभूत्याकृतित्वाभाववान् वा, 'दिव्योऽयं मनुष्य' इत्यनुभवो दिव्यत्वाभाववति दिव्यत्वप्रकारको न वा, अदिव्यवृत्तिप्रकारको न वा, विशेष्यावृत्तिप्रकारको न वा, दिव्यत्वप्रकारकत्वे सति दिव्याऽविशेष्यको न वा, दिव्यत्वव्यधिकरणप्रकाराऽवच्छिन्नो न वा, दिव्याऽवृत्तिप्रकारको न वा, 'मनुष्योऽयं दिव्य' इत्यनुभवो मनुष्यत्वाभाववति मनुष्यत्वप्रकारको न वा, अमनुष्यवृत्तिप्रकारको न वा, विशेष्याऽवृत्तिप्रकारको न वा, मनुष्यत्वप्रकारकत्वे सति मनुष्याऽविशेष्यको

न वा, मनुष्यत्वव्यधिकरणप्रकारावच्छिन्नो न वा, मनुष्याऽवृत्तिप्रकारको न वा, 'दिव्यो मनुष्योऽयं मनुष्य इत्यनुभवो दिव्यमनुष्यत्वाभाववति दिव्यमनुष्यत्वप्रकारको न वा, अदिव्यमनुष्यवृत्तिप्रकारको न वा, इत्येवंविधानि समुपबृंहितानि, दिव्यत्ववैविध्यम्, स्वरूपसत्साकारदिव्याकारपरब्रह्मवेषान्तराद्युपपत्तिः, दिव्यसगुणसाकारताद्युपपत्तिः, निषेधकोटिनिरासाः। मिथ्याभूताऽऽविद्यकाऽऽकृत्यादिविमताऽसिद्धयादिः, अध्यस्तब्रह्मकारणतावादनैर्मूल्यम्, सर्वपदार्थसाकारत्वसमीक्षा, सर्वप्रमाणानां विशिष्टार्थविषयकत्वविशदीकरणम्, कारणावस्थपरब्रह्मसृजिश्रुतिबोधितपुराणसाकारत्वम्, परब्रह्मणः पुरुषविधत्वे श्रुत्युपबृंहणता, ब्रह्मलोकस्थपरब्रह्मणो हेत्याभूषावेषोपकरणादीनां गुणशक्तिसामर्थ्यैश्वर्यबलतेजःप्रभृतीनां च चेतनाऽवतारतायां विभिन्नवेदशास्त्रपुराणादिप्रमाणानि, सर्वकर्मफलप्रदातृत्वविमर्शः। मानवनृत्वेऽप्यवताराणां दिव्यत्वदिव्यवेषभावत्वमण्डनम्, परब्रह्मण्यनादिकालतः कृष्णशब्दप्रवृत्तिनिमित्तत्वम्, श्रीस्वामिनारायणाभिधाने वेदादिपदाधारता, लौकिकानुकरणे तत्पराभवपरिहारादि, दिव्यसगुणसाकारप्रतिपादकवाक्यप्रधानाऽर्थेऽप्रधाननिर्गुणवाक्यार्थसमन्वयः, भगवन्निर्गुणसगुणमूर्त्यवधारणार्थकसमन्वयश्रुतिस्मृतिसूत्रार्थाः, भगवतो व्यतिरेकित्वान्वयित्वाऽन्तर्यामित्वसर्वानुस्वरूपित्वसाक्षित्वपुरुषविधत्वादिपरकप्रमाणानि, भगवतः सर्वकर्तृत्वनियन्तृत्वप्रवर्तकत्वादीनि, विप्रतिपत्तिगतविरुद्धकोट्यसिद्धिसाधकहेतूपन्यासादिः, परमात्मसदानन्दघनदिव्यसगुणसाकारकिशोरमूर्तित्वादिः, ब्रह्ममायेश्वरजीवस्वरूपप्रसिद्धयादिः, उपासनालभ्यसारूप्यादिज्ञानघनानन्दघनसुमूर्तसगुणरसघनमुक्तिस्थित्यादिः, विशिष्टब्रह्माऽद्वैतत्वे पर्यवसानम्, धाममुक्तानां यथावकाशवेषवत्त्वेन भोग्यभोगभोगोपकरणादिविविधार्थकदिव्यवेषान्तरवन्मुक्तिस्थित्यविरोधः, मुक्ताना परमपुरुषसारूप्याकारसमीचीनत्वम्, निजमूर्तिप्रकटीभूताऽवतारादिमूर्तिप्रतिष्ठानादिसिद्धान्तः, श्रीस्वामिनारायणाद्यभिधानाऽनादित्वम्, स्नेहसेवामुक्तित्वम्, साध्यभागवदभिप्रेतमुक्तिसाधनानि, पदार्थतत्त्वविवेकः, आत्मपरमात्मप्रत्यक्षानुभवप्रकाराः, विलक्षणसत्समुच्चयख्यातिप्रदर्शनम्, सविशेषविशिष्ट परब्रह्मणि बहूनां हेतूनामुपन्यासाः, द्वादशमहावाक्यानां विशिष्टार्थबोधपरत्वम्, इत्येतानि विशदतया विहितानि। एतादृशमेतत् सुविशालं बहुतत्त्वसंभृतं सुसत्संगभाष्य श्रीमद्दार्शनिकपञ्चानन षड्दर्शनाचार्य-नव्यन्यायाचार्य-सांख्ययोगवेदान्तमीमांसातीर्थ-वैष्णवविद्वत्सार्वभौम-काव्यकुशलेन श्रीकृष्णवल्लभाचार्येण रचितम्, मूलग्रन्थीय-'सहजानन्दपादाऽब्जषट्पदीकृतचेतसा'इत्याद्युपरिबहुविधव्याख्यान तीक्ष्णशेमुषीमतामपि भवत्याश्चर्यजनकम्, एते पण्डितमान्या विद्वांसः श्रीकृष्णवल्लभाचार्या इदानीं श्रीस्वामिनारायणभगवत्सम्प्रदायस्य प्रधानभूतस्य मूलग्रन्थस्य विविधतत्त्वज्ञानसंभृतस्य दार्शनिकप्रणाल्या सम्पन्नस्य ब्रह्मरसायनमहाभाष्य विरचितवन्तः, एभिस्ततोऽतिरेकिणोऽपि मूलाधाराः सार्वभौमा दार्शनिकाः सिद्धान्ताः पूर्वोत्तरपक्षादिरचनामयस्वरूपाः प्रतिपादिता। द्वाषष्ट्यधिकद्विशततमतरंगाणां २३५१ सूत्राणि सभाष्याणि रचितानि सुसम्पन्नानि विद्यन्ते,

श्रुतितात्पर्यनिर्णयाख्यो वेदान्तग्रन्थोऽपि विरचितः, सोऽयं विशिष्टब्रह्माऽद्वैतात्मकसाम्प्रदायिकमहासिद्धान्तसागरात्मको विद्यते, त एते सर्वविद्यानिधाना महासत्पुरुषाः पारेलक्षं धन्यवादार्हाः, मन्ये श्रीस्वामिनारायणसम्प्रदायसिद्धान्तावलम्ब्यपि सर्वविधवैष्णवसिद्धान्तसम्पोषकमिदं भाष्यं बहुलोपकारकं भविष्यति, विविधानां दार्शनिकविदुषां वैष्णवपण्डितानामपि चातीवाश्चर्यावहमिदं सम्पत्स्यते, भारतीया. काशीस्था विशिष्टविद्वांसोऽप्येतत्पदार्थविषयानालोच्य तत्तत्सम्मतिसुमतिवितत्या समुपकरिष्यन्ति दिव्यभावान्वितं समन्वितमिदं स्वतन्त्रप्रतितन्त्रसिद्धान्तसमृद्धं पुस्तकं सदा विजयते, परब्रह्मपरमात्माऽत्र निरूपितः स्वयमेनं ग्रन्थं स्वस्वरूपवर्णने विशिष्टचमत्कृतिमासादयत्वित्यभ्यर्थयते—

काशी–दिनांक १०-१०-७०	विदुषामनुचरः प्रस्तावकः

**श्रीश्वेतवैकुण्ठशास्त्री**

प्राचीनन्यायाचार्य–वेदान्ततीर्थ—सांख्य-योगवारिधिः



# अनुक्रमणिका



# शुद्धि-पत्रम्

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ३० | मर्वमत्त्वाधिकम | मर्वतत्त्वाधिकम . |
| ७ | ६ | श्रीयेपम्वना | श्रीवेपरचना |
| ८ | २२ | मू मूर्तिमत्त्वे | सुमूर्तिमत्त्वे |
| ९ | ६ | सिद्धया | सिद्धया |
| ११ | ३० | मुपुर्णौ | मुपर्णौ |
| १३ | ७ | निरमरणवत | निःसरणवत् |
| २८ | २ | स्वरूपमत्याकार. | स्वरूपसत्साकारः |
| ३१ | १२ | तस्यामपि च | तस्य मयि च |
| ३१ | १९ | ३७ | ३," |
| ३३ | १ | चेत् न | 'चेतन' |
| ३३ | २ | 'नि' | 'नित्य' |
| ३३ | ३ | नेष्टलमपरम | नेष्टलपरम |
| ३५ | १२ | मूर्तिदर्शने तत् | मूर्तिदर्शनेतरत् |
| ३५ | २६ | भावम् | एवम् |
| ३६ | ४ | मुक्तोपसित | मुक्तोपासित |
| ३६ | ७ | को ह्यर्क | कोट्यर्क |
| ३६ | २७ | मखीजन. | मखीजनाः |
| ३७ | १५ | श्रीमहेक | श्रीमदेक |
| ४० | २९ | प्रक० | प्रक० ४ |
| ४२ | २५ | हरिरति हरासि, | हरिरिति हरासि |
| ४७ | ६ | मह्स्व | मह्स्व |
| ४७ | २८ | व्यस्पर्श | दिव्यस्पर्श |
| ४८ | १० | अप्यते | अय्यते |
| ४८ | १२ | सच्चिना | सच्चिदा |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४८ | १४ | गुणस्वरूप | गुणवत्स्वरूप |
| ५१ | १५ | मूर्तिः परमात्मनि, | मूर्तिपरमात्मनि |
| ५७ | ८ | अथानन्दाताः | अथानन्दान्ताः |
| ६८ | २० | दूरीकार्य | दूरे कारयित्वा |
| ५४ | १९ | प्रतितन्ये | प्रतितन्त्रे |
| ६८ | २ | निपोजज्ञिरे, | निमेषा जज्ञिरे |
| ६७ | ११ | इति | इति । इद |
| ६७ | २१ | इति | इति । अनेन |
| ६७ | २७ | नन्दाति | नन्दादि |
| ७२ | १९ | स्वमानस भवान् | स्वमानसभवात् |
| ७३ | २५ | मास्कारिकाणा | सासारिकाणा |
| ७६ | २० | ऽष्टास्चुल्हे | ऽष्टास्युल्हे |
| ७७ | ६ | अन्वयाऽवस्थाश्व | अन्वयाऽवस्थाच्च |
| ७७ | ११ | चक्षुविहीनः | चक्षुर्विहीनः |
| ७७ | १५ | परमातमा | स. परमात्मा |
| ८० | २७ | धर्मजन्या | धर्मजन्मा |
| ८१ | २५ | मावतो | भगवतो |
| ८८ | ३ | साकार | समाकार |
| ८९ | २४ | यथभावकाश | यथावकाश |
| ८९ | ३२ | स्वस्वामिनाम | स्वस्वामिनारायणनाम |
| ८९ | ३३ | अध्याये | अध्याये ७, |
| ९३ | १३ | निर्विकल्पस्य | निर्विकल्पकस्य |
| ९३ | १४ | सविकल्पस्य | सविकल्पकस्य |
| ९३ | २३ | ग्राहित्वेन | ग्राहित्वे |
| ९५ | २० | यावदय | तावदय |
| ९६ | १ | केतन | चेतन |



## पण्डितवर्य-श्रीकृष्णवल्लभाचार्यविरचितपुस्तकानि

१—सांख्यकारिका श्रीस्वामिनारायणभाष्यम्
२—सांख्यतत्त्वकौमुदीकिरणावली टीका
३—योगसूत्रश्रीस्वामिनारायणभाष्यम्
४—योगसूत्रभोजवृत्तिकिरणम्
५—सांख्यकारिकागौडपादभाष्यकिरणम्
६—श्रीस्वामिनारायणवेदान्तसारः
७—हितोपदेशमित्रलाभकिरणावली संस्कृत हिन्दी
८—तर्कसंग्रहन्यायबोधिनीपदकृत्यटिप्पणी
९—न्यायसिद्धान्तमुक्तावलीकिरणावली
१०—शिक्षापत्रीकिरणावली सस्कृत-गुजराती
११—श्रीगुणातीतानन्दस्वामिवार्ता सस्कृत हिन्दी
१२—श्रीगोपालानन्दस्वामिवार्ता संस्कृत हिन्दी
१३—स्वामिनारायणवचनामृत हिन्दी
१४—श्रीशिक्षापत्री हिन्दी
१५—अखिलभूमण्डलीयसाम्प्रदायिकमुक्तिव्यवस्था संस्कृत गुजराती
१६—तत्त्वप्रभावली संस्कृत
१७—श्रीगुणातीतब्रह्मोपनिषत् संस्कृत
१८—तर्कसग्रहदीपिकाकिरणावली
१९—विशिष्टाद्वैतऽपि विशिष्टब्रह्माद्वैतत्वम्
२०—सुधासिन्धुसारसन्दोहनम्
२१—कविकाव्यगौरवम्
२२—ख्यातिविमर्शः
२३—प्रमात्वविमर्शः
२४—जातिविमर्शः
२५—सुधासिन्धुप्रामाण्यहेतवः, सुधासिन्धुसूत्राणि च,
२६—श्रुतितात्पर्यनिर्णयः
२७—साकारत्वविमर्शः
२८—श्रीहरिस्वरूपनिर्णयस्य श्रीसत्सङ्गभाष्यम्
२९—सुधासिन्धोर्ब्रह्मरसायनभाष्यम्
३०—अवताराऽवतारिप्रमाणवचनचिह्नानि
३१—अन्येऽपि। स्तोत्राण्यपि च।

श्रीस्वामिनारायणपरमात्मने नमः

योगकलानिधि-यतीन्द्र-श्रीमत्-सद्गुरुश्रीगोपालानन्दस्वामिविरचितः

# श्रीहरिस्वरूपनिर्णयः

श्रीकृष्णवल्लभाचार्येण स्वामिना विरचितं

## श्रीसत्संगभाष्यम्

यस्त्वानन्दघनः सुदिव्यतनुसानन्दस्वरूपो विभु-
श्चान्तःसच्चिदचित्समन्वितकिशोरानन्दरस्यो रसः ।
जीवेशावतरस्वरूपमपगान्तर्यामिसद्ब्रह्मधृक् (म-माया प-पदार्थाः)
सोऽयं स्वामिनरायणो विजयते श्रीमानवो मूर्तिमान् ॥ १ ॥

मुक्तैर्ब्रह्मपुरोगमैरभिनुतः संसेवितो धामनि
मायेशैश्च सदा स्तुतोऽतिरमणीयाभिस्वरूपो हरिः ।
वेदान्तैः श्रुतिमूलशास्त्रनिवहैर्दिव्याश्रयैश्चेरितः (दिव्यगुणाः)
सोऽयं श्रीहरिकृष्णधर्मतनयः स्वामी जयत्यन्वहम् ॥ २ ॥

हरिस्वरूपस्य सुनिर्णयात्मा ग्रन्थः श्रुतिस्मृत्यखिलप्रमाणः ।
संशील्यते तन्मननाऽभिवृत्त्या सत्संगभाष्यं तदुपास्तिरूपम् ॥३॥

परः प्रभुः सर्वगतोऽन्तरात्मा साधुस्वरूपो मनुजो वृषात्मा ।
मूलस्वरूपोऽत्र पराऽन्तरात्मस्वरूपयोः शास्त्रगतः प्रवर्ण्यः ॥४॥

## 'अथ श्रीहरिस्वरूपनिर्णयः श्रुतिस्मृतिभिर्लिख्यते श्रीगोपालानन्दमुनिना'—

**जयति जयति सार्वज्ञ्यश्चिदात्मप्रकाशी**
**वहति वहति शिष्टं स्वात्मकं सद्विलासि ।**
**हरति हरति जिह्मं दिव्यवैगुण्यभासि**
**विशति विशति वश्योपास्तिहृत्संविकासी ॥ ५ ॥**
**श्रीकृष्णवल्लभाचार्यः सर्वविद्यामहोदधिः ।**
**सत्संगभाष्यं रचये हरिस्वरूपनिर्णये ॥ ६ ॥**
**अथ मूर्तो हरिर्दिव्यो धाम्न्यक्षरे परेश्वरः ।**
**अन्तर्याम्यवताराश्च दिव्या मानववेषिणः ॥ ७ ॥**
**पुनर्दिव्योऽत्र यस्तत्र योऽत्र तत्र स एव सः ।**
**सर्वात्मा श्रीस्वामिनारायणः सोऽत्र निरूप्यते ॥ ८ ॥**

ओमिति श्रीस्वामीति श्रीस्वामिनारायणपरमात्मेति धामस्थदिव्यमाकार हृदयाद्यस्थदिव्यान्तर्यामिमाकार मानववेषस्थदिव्यसाकार सगुण किशोर स्वरूपसत्सुमूर्त श्रीहरि नमस्कृत्य ग्रन्थकारो निर्णय करोति—**अथेत्यादिना अथेत्यानन्तर्यवाचकः** । आनन्तर्यम् अव्यवहितपूर्वत्वमाक्षिपति, पूर्वोत्तरयोर्बहुधा ममर्गित्वम्, यदुत्तर तत् स्वाव्यवहितपूर्वमपि स्वोद्भावानुगुणमाक्षिपति, न त्वननुगुण नाऽसगतिक नाऽसंसृष्ट च । अत्र किमुत्तरम् ? **श्रीहरिस्वरूपनिर्णय** इति । अत्र निर्णय इति पूर्वम् अनिर्णय संशयमाक्षिपति, तथा च पूर्वं संशयस्य विषयः पश्चान्निर्णयस्य विषयः, स त्वेक एव, एक वस्तु स्वरूपम्, किं वा कस्य वा तत् ? श्रीहर्यात्मक श्रीहरेः स्वरूपम्, तच्च दिव्यमानवस्वरूपम् अत्र प्राक् प्राप्तमेवेति, केषा प्राप्तम् ?, मानवस्वरूपस्थभक्ताना सत्सङ्गिना त्यागिगृहिणां नरनारीणा प्राप्तिविषयम्, आश्रिताना प्राप्तिविषयम्, प्राप्तस्याऽऽश्रयस्ततः स्वरूपभान वा प्राप्तस्य स्वरूपभान तत आश्रय इत्यन्योन्याश्रयमाक्षिपति, नाऽऽक्षिपति, सामान्येन ज्ञातस्याऽऽश्रयः, सामान्यधर्मज्ञानं सन्देहकम्, सन्देहवारणार्थ निर्णय इति । तथा च श्रीहरिस्वरूपस्य प्राप्त्यनन्तरं सन्देहनिरासार्थं निर्णय, स च प्रत्यक्षेण निश्चयोऽपि भाविना प्रमार्थं श्रुतिभिः स्मृतिभिश्चोपबृहणन्यायेनाऽनिवर्त्यः सम्पाद्यते इति । लिख्यते लेखाभिः शब्दवाक्यरेखाभिर्हेतुभिश्च स्वात्मस्थोऽपि प्रकाश्यते । केन प्रकाश्यते ?, मया श्रीगोपालानन्दमुनिना तत्प्रेरितेन तच्छिष्येण तत्प्रदत्तसाक्षाद्दिव्यदृष्टयात्मकप्रतिभया तदाहिताऽनुरूपाकारया सामस्त्येन प्रकाश्यत इति । गोपालः गवा किरणाना पालः 'यत्र गावो भूरिशृङ्गा अयासः तद् वृष्णः परम पदमवभाति भूरि' इत्यत्रोक्त—वृष्णस्य व्यापकस्याऽन्वयिनो व्यतिरेकिणश्च परब्रह्मणः श्रीहरेः अनादिश्रीकृष्णनारायणस्य परमं सर्वश्रेष्ठं सर्वव्यापक पदमक्षरं धाम भूरि प्रकाशघनात्मकं बहुल सर्वसत्त्वाऽधिकम् अवभाति प्रकाशते, यत्र धाम्नि तस्य परमेश्वरस्य दिव्यकिशोरमूर्तेः स्वरूपसत्सच्चिदानन्दघनमूर्तेर्गावः किरणानि

**'सहजानन्दपादाऽब्जषट्पदीकृतचेतसा'**

भास्वररश्मयः भूग्निश्रृगाः असीमोज्ज्वलकरतरङ्गा. अयामः विशालास्तेषा मूर्निर्मूल प्रान्तमपि मूर्तिरेव गत्वाऽग्र प्रसृता अप्रतिहतप्रान्ता वर्तुलमनुसृत्याऽपाराकाशमावृत्य पारवन्तोऽवस्थितिमाता मूर्तौ विश्राम्यन्तीति नान्यत्रैवविधाऽन्तरहिताः, तादृशाना किरणाना पात्रो मूलतयाऽऽधारो विश्रान्तितयाऽपि प्रान्ताधारो यः परमात्मा स एव गोपालस्तस्याऽऽनन्दवान् श्रीस्वामिनारायणपरमात्माऽऽनन्दपात्रम्. आनन्दघनो धर्मी शरीरी परमात्मा श्रीहरिस्तत्र धर्मात्मका द्रव्यमानन्दो गुणश्चापि मुक्ताशनविषयः. स आनन्दो गोपालस्याऽनादिश्रीकृष्णनारायणस्य श्रीहरिकृष्णपरमात्मनो महानन्दस्तद्वान् तद्भोजी श्रीगोपालानन्दमुनिः, मौन परमेश्वरेतरेषु, भगवति न मौन, भगवदर्थे न मौन, भगवदर्थ वाणी मौनमेव, तद्वान् मुनिः, साधुधर्मवांश्च, मन्यते मनुते भगवन्मात्र चिन्तयतीति मुनिः, भगवद्दीक्षावान् परमहंसो महापुरुषोत्तमो ब्रह्मविद्यावान् पराविद्यावान् महामुनिः, श्रीस्वामिनारायणभगवच्छिष्योऽनादिश्रीकृष्णनारायणप्रतीकः पातञ्जलयोगसामस्त्यनिगानमूर्तिः निर्विकल्पसमाध्यन्तगतिको महायोगीश्वरो नैष्ठिको ब्रह्मचारी परब्रह्मचारी गोपालसृष्टिपालसर्वपालानन्दाऽपरोक्षसाक्षात्कारात्मकाऽलौकिकदिव्यमननतदात्मको ज्ञानघनोऽपि महैश्वर्यघनः सत्प्रकाशघनोऽप्यानन्दघनमूर्तिपिण्डात्मको ब्राह्मणब्रह्मरसायनास्वादमग्नो विशिष्टब्रह्माऽद्वैतसार्वज्ञ्यसभृतो सच्चिदानन्दात्मैकतत्त्वमूर्तिरपि मानवमूर्तिनिभः साधुलक्षणसाधूत्तमः श्रीगोपालानन्दस्वामी श्रीहरिस्वरूपनिर्णयोपदेष्टा, 'हरिस्वरूपज्ञानार्थं स्वरूपनिर्णयः कृतः । गोपालानन्दमुनिना श्रुतिस्मृत्यनुसारतः' । 'श्रीविक्रमशकस्याऽब्दे वेदाऽङ्कवसुभूमिते ( १८९४ ) बुधे वसन्तपञ्चम्या निर्णयः पूर्णता गतः' इति स्वय ग्रन्थान्ते दर्शितत्वात् । निर्णयो नाम—विमृश्य पक्षप्रतिपक्षाभ्यामर्थाऽवधारणम् । पक्षप्रतिपक्षाभ्या साधनोपालम्भाभ्याम् उपलम्भः परपक्षदूषणम्, अर्थस्याऽवधारण तदभावाऽप्रकारक ज्ञानम्, अनिवृत्तो विमर्शो विरुद्धयोरेकधर्मिस्थयोर्न्याय प्रवर्तयति, यत्र तु धर्मिसामान्यगतौ विरुद्धौ धर्मौ साकारो निराकारो वेति, तत्र श्रुत्यनुकूलहेतुतः साकारत्वम्, श्रुतिप्रतिकूलहेतुतो निराकारत्व न सभवतीति, अयुगपद्भाविनोर्धर्मयोः कारणत्वकार्यत्वयोस्तु कालविकल्पः सृष्ट्यादौ परब्रह्माऽकार्यं कारणं सृष्टौ तु कार्यमकारणम्, विशेषणभेदेनापि भिन्नकाले निर्णयः—सूक्ष्मचिदचिद्विशिष्ट कारण परब्रह्म तदेव स्थूलचिदचिद्विशिष्ट तु कार्यमिति । एव स्वरूपम् आनन्दघनमूर्तिर्व्यतिरेकी परमात्मा, स एवान्तर्यामी, स एव च मानवमूर्तिर्दिव्य एक एवेति निर्णयः । प्रकटे प्रत्यक्षे साक्षान्निर्णयः, परोक्षे पक्षप्रतिपक्षाभ्यामर्थाऽवधारणं परीक्षाविषयत्वाद् विमृश्येति । यत्स्वरूपनिर्णयोऽत्र प्रकाशयितव्यस्तत्स्वरूपे तत्प्रमाज्ञप्तिर्निर्णेत्रा यावत्त्वेन तल्लग्नीकर्तव्या, सा च पौरुषेयबोधात्मिका चिच्चैतन्यस्वरूपा निर्णेतृनिष्ठा यथावस्थितपदार्थव्यवहारानुगुणा दिव्यमानवमूर्तिसामस्त्यगोचरा अनवशेषविशिष्टतत्त्वाभिजीवना परमाक्षरधामनिलयाऽपि सर्वान्तर्यामिमहाऽलौकिकैश्वर्यशालिनी सर्वान्तःस्था सती च सकलाश्रितजननयनाऽसुलभा शर्करारसजनालिकेरफलनिभैकाऽऽनन्दतत्त्वात्मस्वरूपसत्सच्चिदानन्दमहानन्दघनसाकार-

'स्वरूपनिर्णयः कार्ष्णिबालबोधाय तन्यते' ॥

मूर्तिः स्वयमेवाऽऽनन्दसमूर्ताऽऽनन्दघना स्वाभाविकानन्दस्वरूपिणी सहजानन्दमूर्तिः श्रुता मानिता चिन्तिता निदिध्यासिता साक्षात्कृताऽखिलाऽपि पुनः पुनः श्रुतिस्मृतिसाहाय्येनोपास्यते मनश्चिदात्मचैतन्यवृत्त्येति ग्रन्थोद्देश्य प्रथममाह—**सहजानन्दे**त्यादिना । सहजानन्दस्वामी श्रीस्वामिनारायणः परमात्मा श्रीहरिर्हरिकृष्णमहाराजः, गुणगुणिभावनित्यत्वबोधक सहजपदम्, समस्तस्वेतरशरीरशरीरिभावविशिष्टतत्त्वतात्पर्यग्राहक वा सहजपदम् । सहो व्याप्तिः, केषा ? जन्यानाम्, कुत्र ?, अजन्येषु नित्येषु, इत्येव 'जा' 'ज + आ' पदेन स्थूलसूक्ष्म जडचेतन च समस्त सगृहीतम्, तच्छरीर्यानन्दघनमूर्तिः श्रीहरिः । तत्**पादाब्जे**त्यनेन 'आनन्दमात्रकरपादमुखोदरादि.' संवर्णितोऽत्र साकारसगुणमूर्तिः स्मारितः, तथा चात्र मानवदिव्यस्वरूपः श्रीस्वामिनारायणपरमात्माऽऽनखशिख दिव्यानन्दघनैकतत्त्वस्वरूपसत्साकारसगुणमूर्तिः, अन्तरात्माऽपि 'रूप रूप प्रतिरूपो बभूवे'त्यनेन दर्शितोऽपि स एवाऽऽन्तरदिव्यस्वरूपो दिव्यानन्दघनैकतत्त्वस्वरूपसत्साकारसगुणमूर्तिः, स एव च 'दिव्ये ब्रह्मपुरे ह्येष व्योम्नि आत्मा प्रतिष्ठितः, आत्मैवेदमग्र आसीत् स पुरुषविध' इत्यनेन दर्शितः स एवाऽक्षरब्रह्मधामनिलयः पूर्णपुरुषोत्तमः परब्रह्म परमेश्वरः परमात्माऽक्षरधामस्थदिव्यरूपो दिव्यानन्दघनैकतत्त्वस्वरूपसत्साकारसगुणमूर्तिः । सोऽयमत्र सहजान् सहयोगिजनान् आनन्दयति, आनन्दवल्ल्याम् अस्यैवानन्दघनस्य मीमासा स्वरूपस्य स्वरूपाश्रयानन्दस्य च कृता । आनन्दो नित्यानन्दो द्रव्य सुमूर्तिः परमात्मा, आनन्दो गुणद्रव्यम् आनन्दमूर्तौ परमात्मनि स्वात्मकानन्दः स्वनिवासेषु चेतनेषु भगवन्निहितो विलक्षणविषयतया वर्तमानः सर्वान् आनन्दयतीति 'अस्याऽऽनन्देन सर्वे आनन्दिनो भवन्ति ह्येष आनन्दभूमिः परात्मा' इत्यपि दर्शितः । अस्याऽपरिमिता गुणा ऐश्वर्याणि सामर्थ्यानि शक्तयः ससर्गा अपि आनन्दमूला आनन्दपिण्डा आनन्दमात्रा आनन्दात्मकाः कल्याणकरदिव्याः, सर्वाणि भूतान्यस्याऽऽनन्दमात्रामुपजीवन्तीति । तस्य परमात्मनः पादाब्जे चरणकमले, भक्त्यैतत्कथनम्, यद्वा आनन्दरसस्य पानस्याऽऽदानाय यत्कमलमब्ज हृदयकमल तत्र स्थितिरान्तरमूर्तिः श्रीहरिर्मानसाऽलौकिकसमाधिसयमसाक्षाल्लभ्य इति । तत्र षट्पदो भ्रमरः, भ्रमरीकृत चेतस्तेनेति । यद्वा षट् इन्द्रियाणि मनःसहितानि ज्ञानेन्द्रियाणि, तेषामास्पदम् आनन्दग्रहणार्थ पद स्थान विषयः विषयीकृता मूर्तिर्येन तेन चेतसा चिन्तनाभ्यस्तसाक्षात्कारात्मिकया बुद्ध्या । भगवदाकारबुद्ध्या भगवान् गृह्यते वर्ण्यते च न तु तदनाकारया, तदेकाग्र्यया तद्धारणया तद्ध्यानेन तत्समाधिना च यद् दृष्टिपथनीत दिव्यस्वरूप दिव्यमानवस्वरूप तस्य स्वरूपं तादात्म्य निजात्मक रूपणीय दिव्यकिशोरमूर्तितत्त्व शब्दप्रमाणेन प्रत्यक्षमूलकेन भगवद्भागवतमूलकेन श्रुतिस्मृतिसमुपबृंहणेन च शाब्दप्रमयाऽभ्यस्यते, मुक्तावप्येतत्कर्तव्यम्, अत्राप्येतद्विधेय विधीयते, विधिः ध्यानाभ्यासः कर्तव्य इति । स च परिपक्वः सन्नलौकिको ब्राह्मसाक्षात्कारः, स चाऽऽवर्तनीयः, अत्र यावदायुष्मावर्तनीयस्ततोऽपि मुक्तित्वव्याप्य-

मावर्तनम् । सहन्ते सहा जायन्ते जाः सहजा मुक्ताः माध्वादयस्तानाश्रितान् सर्वाना-नन्दयतीति सर्वानन्दप्रदो भगवान् परब्रह्मस्वरूपमत्साकारमूर्तिस्तत्पादाब्जे मानस षट्पदीभूत षट्कक्षागत तत्त्वनिर्णयकथासु षट्कक्षाभिर्निर्णयः सम्पन्नते, स्थापना परमात्मा, साकारो निराकारो वा संशयः, निराकारः पूर्वपक्षः, साकार उत्तरपक्ष. जात्युत्तरादिप्रयोगाः, तदुद्धार-पूर्वकयथार्थतत्त्वनिर्णय. । इत्येव षट्पक्षिप्रयोगनिपुणचेतसा । सहो नित्यार्थकः, जो मूर्त्यर्थकः, लाक्षणिकौ सहजौ, शक्यार्थो विशिष्ट. परमात्मा च कारणात्मकश्च कार्यात्मकः परमात्मैव, स एवाऽऽनन्दघनमूर्तिरिति । स्व एव रूप्यते स्वरूप., सच्चिदानन्दघनमूर्तिः परमात्मा नित्यप्रत्यक्षप्रजया स्वय ख्यायते प्रकाशते. न चाक्षरब्रह्म वर्णयति पश्यति प्रकाशयत्यपि, अनादि-मुक्ताः सादिमुक्ता अपि निरूपयन्ति. स्वीया. स्वकीया ये ये स्वद्रष्टारस्ते ते निरूपयन्तीति, ततः सृष्टावपि तदृष्टिद्रष्टारोऽपि त निरूपयन्ति, स्वः स्वेषु वर्तमानः सन् स्व स्वीयद्वारा निरूपयति स्वः स्वेन निरूप्यते स्वो निरूप्यते दिव्यगुणैश्वर्यचमत्कारसामर्थ्यशक्तिचिह्नाभूषाऽ-लकारवेषोपकरणयावदुपपन्नोपसेवितो यावद्युक्तोपपन्न. स्वरूपम कार्यकारणात्मकसाकारमूर्ति-भगवान्. तस्य निर्णय. तत्त्वस्य सपरिकरस्य विशिष्टस्य इतिमूर्तिरिति निश्चयोऽत्र तन्यते. विशिष्य विविच्य षट्पक्ष्यादिरीत्या निर्णयोपसर्गान्निरस्य श्रुत्यादितात्पर्यप्रतिप्रदर्शनपूर्वको वितन्यते । तत्राऽधिकारिण आह—**कार्ष्णीति** । श्रीकृष्णनारायणस्य परब्रह्मणो ( हरिकृष्ण-भगवति ) आश्रितत्तासम्बन्धवन्तो ये ये देहिनो बोधाधिकारिणो वैष्णवाः कार्ष्णाः, आश्रयता-सम्बन्धेन ये वा कृष्णवन्तस्ते ते । यद्यप्याश्रयाश्रयिभावस्तु सार्वदिको वर्तत एव सर्वजीवेश्वर-मायामुक्तादीनाम्, तथापि मानवदेहेष्ववस्थिताना जनिमृतियोगिशरीरवता शास्त्रविध्यधिकारेण सम्प्रदायविशेन ये विशेषतो मोक्षसमर्गिणस्तत्रापि भगवत्स्वरूपाभिलाषिज्ञानिनो ये विशिष्टा-धिकारिणस्तेषामर्थे विशेषतस्तत सर्वेषामर्थे सामान्यतोऽपि यो बोध. 'परमेश्वरोऽयं साकारः सर्वेश्वरेश्वर' इत्यादिरूपः, 'अनेकविधमाहात्म्यज्ञानप्रकारानुगतमहामाहात्म्यज्ञानपूर्वको बोधो महाविशिष्टबोधस्तदर्थम् । अत्रैतादृशबोधरहितास्ते बोधार्थमधिकारिण., ये यत्राऽनभिज्ञास्तत्र ते बाला., श्रीहरिस्वरूपाऽनभिज्ञाना बालाना बोधाय तन्यते । सर्वशास्त्राऽभ्यासेऽपि जीवात्मबुद्धेरसार्वज्ञ्यात् भगवति यावत्त्वेनाऽप्राप्तैर्या यदशोऽगतिस्तत्राशे बालबुद्धित्व तादृश-बालबुद्धौ यावत्सत्त्वाग्रन्यूनतापरिहारार्थम् अपेक्षितस्यापि त्रुटीपरिहारार्थं स्वरूपस्य यथाबुद्धि-बलोदय यथापर्याप्त यथापेक्षित विवेचनमत्सबुद्धिपर्यन्त वितन्यते इति । श्रीहरिकृष्णभगवद्-बलवन्तोऽपि बालाः, कार्ष्णैर्बहुलानर्थान् लान्ति गृह्णन्तीति बालाश्चतुष्पुमर्थपरायणा भगवत्समु-पाश्रिता बालाः, ऐकान्तिका भक्ता अपि बाला., अबाला अपि बाला भवन्ति शुकवत्, श्रीगोपालानन्दस्वामिवत्, सर्वार्थज्ञानवन्तोऽपि पुनः पुनरुपासनार्थं तमेवार्थं बहुविधा-भिरावर्तयन्तीति बालाः, अध्यापका अपि यमेवार्थमाजीवनम् अध्यापयन्ति ज्ञानार्थं दार्ढ्यार्थ-मविस्मरणार्थं च तेऽपि तत्र तत्राऽबाला अपि बालाः, तथा च पुन. पुनस्तदीयज्ञानाऽऽ-कांक्षित्व बालत्वम् । कार्ष्णि यद् ब विम्ब मूर्तिस्तत्र यथाकिञ्चिज्ज्ञातेऽपूर्णे ज्ञातेऽप्यलम्बुद्धि-मन्तस्तेऽपि कार्ष्णिबाऽऽलास्तेषामनलम्बुद्धयर्थं विवेचन तत्फल तु परमाऽलम्बुद्धिस्तदर्थो बोधस्तस्मा

## श्रीहरेरनादिनित्यसिद्धदिव्याकृतित्वम्

इति च। "कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते"। 'कृषिर्विशिष्टवचनो नश्च नाऽन्यस्तथाविधः। स्वान्यस्वनिभशून्यो यः स कृष्णः परमेश्वरः'। 'कृष्टिः सृष्टिः समस्ता वै तस्या निवेशवांश्च नः। सर्वतत्त्वनिविष्टोऽन्तर्यामी कृष्णोऽभिधीयते'। 'आश्रिताना समाकृष्टिर्धामाऽऽनयनयत्नवान्। मोक्षप्रापयिता कृष्णः परमात्माऽत्र मानव.'। 'कृष्णरूपधरश्चाकर्षणशक्तिर्नयान्वित.। नीतिधर्मान्वितो नाथो ह्यनाथाना हरिर्हि सः'। 'कृष्यते घटघ्यते मूर्तिर्निवासस्तत्र मन्यते। मूर्त्यर्चात्मा मन्दिरेषु कृष्णः स्वीयप्रसेवितः'। 'आकृष्यन्ति जनान् नैजे स्वरूपेऽतिनयन्त्यपि। धाम्नि त्यागाश्रमे चापि साधुः कृष्णो गुरुर्हि सः'। 'कृष्णवन्तश्च ये कृष्णस्वरूपज्ञानपारगाः। अबालास्ते तदन्ये तु बाला ज्ञानाऽऽल्प्ययोगिनः'। 'पूर्णज्ञानाः पञ्चधा वै साक्षाद्धर्मात्मजेक्षणाः। अन्तर्यामीक्षणाश्चापि विशिष्टार्थेक्षणा अपि। परब्रह्मेक्षणाः सर्वावतारीक्षणिनोऽपि च'। 'आनन्दघनविज्ञाश्चानन्दाकारप्रवेदिन.। सर्वदिव्यगुणज्ञाश्च मानवाकारवेदिनः॥ अन्वयिज्ञाऽतिरिक्तज्ञास्तन्मयैक्यप्रवेदिन.। परब्रह्मस्वरूपज्ञाः स्वान्वितज्ञाः सदोत्तमाः'॥ 'परब्रह्मस्वरूपानन्दाशनास्तृप्तिकाङ्क्षिणः। सहजानन्दभोगा वै कार्ष्णिबालाः समीरिता.'। मण्डलब्राह्मणोपनिषदि ब्राह्मणे २, प्रोक्तम्-'तदभ्यासादखण्डमण्डलाकारज्योतिर्दृश्यते, तदेव सच्चिदानन्द ब्रह्म भवति, एवं **सहजानन्दे** यथा मनो लीयते तदा शान्तो भवी भवति, तदभ्यासान्मनःस्थैर्यम्', इति। स्वरूपे प्रवेश., निर्णयगोचरसाक्षात्कारः, विशिष्ट ज्ञानम्, तद्वर्णनं श्रुति. श्रुतिनिभोऽयं निर्णयोऽनिर्णीतमतीना बोधाय प्रभवतीति। तदर्थं **तन्यते** इति। तनूक्रियते वा विस्तार्यते, तनूक्रियते तत्र सहजानन्दे सर्वसमन्वयस्तनूभाव., तस्य सहजानन्दस्य सर्वत्राऽन्वयो विस्तारोखिलागमसञ्चारित्वम्, तथा च सहजानन्दे परब्रह्मणि सगुणनिर्गुणसुमूर्तामूर्तसाकारनिराकारादिवाक्याना श्रुत्यादीना समन्वय. क्रियतेऽपि च तद्गर्भकानेकविधनिरूपणेन विस्तार्यतेऽपि च। अयमायास. शास्त्रीयब्राह्मीयतत्त्वीयपरिष्कृतबुद्धीना निम्नप्रज्ञाशप्ररोहणार्थोऽप्युपासनात्मकत्वादनायासः, आविर्भूतभगवद्विषयसाक्षात्कारफलवत्त्वात्, यतो ये षटपदीकृतचेतासस्ते बालवद्रमणा बालाः, बल्यन्ते बलन्ते वा सचलन्ति परमेश्वरमात्रे ते बालाः, वाडन्ते वल्यन्ते वालाः संवरणशीलाः भगवत्कलतमर्यादावन्तो भागवता अपि जिज्ञासवो बाला बालाः, भगवत्प्राणा बालाः, एतादृशाना बालाना बोधोऽपि बालः सूक्ष्मविषयो भगवद्विषय एव, न ससारविषयः, संसारोऽसूक्ष्मः, तद्विकासार्थमुपासनादार्ढ्यार्थं निर्णयः, स्वरूपतो निर्णीत एव भगवान् निर्णीयते, दृढोपासनाविषयः क्रियते, यद्बुद्धावप्रकाशित यथार्थस्वरूपं तत्रैतत्प्रकाशार्थं शाब्दी भावना वितन्यते, अभिप्रायोऽभ्यस्यते इति। भगवद्वाक्येषु भगवतोऽभिप्रायः, भगवान् यत्र साक्षान्निवसति स भागवतः, भगवतो भागवतस्य चाऽभिप्रायैक्यम्. वक्तुरभिप्रायो वाणीस्थितः, स च श्रोत्रा स्वात्मनि समवगताऽश्रोतृभ्य कालान्तरदेशान्तरस्थपारम्परिकश्रोतृवाचयितृप्रभृत्यर्थं वितन्यते विशदीक्रियते ग्रन्थात्मकरेखाभिरिति। अत्र बालबोधः प्रयोजनम्,

बाला अधिकारिणः, यथार्थपरब्रह्मश्रीहरिस्वरूप विषयः, सम्बन्धो बोध्यबोधकभावः। श्रीः, श्रयति हरिमिति श्रीः, लक्ष्मीः, स्वर्णरेखास्वरूपा हृदि, भगवद्दिव्यसच्चिदानन्दघनस्वरूप-सत्साकारकिशोरपरमपुरुषहृदयदर्शनविषया, यदात्मकः सर्वब्रह्मप्रकाशो मूर्तिप्रकाशः सर्व-प्रकाशान्वयिदिव्यप्रकाशात्मकस्वर्गरेखास्वरूपा श्रीः, भगवत्स्वरूपाऽपृथक्सिद्धतादात्म्यमूर्तिः श्रीः, श्रीहरिरेव श्रीः, विशिष्टहरिः अन्वयी श्रीः, व्यतिरेकी भगवान् हरिः अन्वयि-व्यतिरेकी परब्रह्म श्रीहरि। 'श्रीर्वेषरचना शोभा भारतीसरलद्रुषु, लक्ष्म्या त्रिवर्गसम्पत्तौ वेषोपकरणे मतौ' इति विश्वप्रकाशान्निरतिशायिनी दिव्या शोभा श्रीः, सर्वैराश्रयणीया श्रीश्च यन्मूर्तौ तदात्मकतया नित्य जागर्ति, सौशील्यस्वरूपा स्वयं प्रकाशिता भगवदनुगुणा गुणस्वरूपा स्वयमेवाऽऽस्ते च, हृदयप्रीणन श्रीयोग, प्रसन्नता श्रीः, पुण्य श्रीः, प्रीतिः श्रीः, मुक्तमण्डल-मध्यवर्तिस्वीयतादात्विकशोभाऽपि श्रीः, प्रेम श्रीः, वरण श्रीः, श्रीश्च सर्वसमाश्रयणीयत्वोप-कारकसौशील्यश्रीः, परमेश्वरस्य स्वामिनः सेवकैः सह नैरन्तर्येण सश्लेषः श्रीः, आश्रयणे समुपकारिका श्रीः, सौशील्यमेव सर्वतो गरीयसी श्री, भगवतः सर्वसौलभ्ये समधिकतरा रुचिः श्री, महतो मन्दैः सह नैरन्तर्येण सश्लेषः सौशील्य श्रीः, अक्षरे धाम्नि मुक्तादि-स्निग्धदिव्यजनसश्लेषसमुन्मिषितमहोत्साहकृता तादात्विकमूर्तिशोभा श्रीः, न हि भगवतो भक्तेभ्योऽन्यः स्निग्धतमः, क्षणमपि भगवद्विश्लेषमसहमाना भगवत्सश्लेषैकलब्धसनातनजीवनास्त सर्वात्मना भजन्ते इति सर्वात्मन्व श्रीः, सश्लेषे महोत्साहः श्री, स्निग्धतमसश्लेषाभिकाङ्क्षि-भगवतो भक्तसश्लेषे महानेवोत्साहस्तद्वतस्तदानीन्तनदिव्यकिशोरमूर्तिकान्त्यतिविलक्षणताऽपि श्रीः, धृतावतारदिव्यमानवस्वरूपस्य सर्वालङ्काराभूषणाम्बरोपकरणकिसलयकुसुमकेसरसुगन्ध-सारादिपरिकलिता दिव्यमानववेषानुगुणविचित्रनेपथ्यरचना श्रीः, एकान्तलीलारसः श्रीः, नितरां निर्वृत्तिः श्रीः, अप्राकृतैकरुचिरसरस्यता श्रीः, स्वरूपम् आनन्दघनमूर्तिर्भगवान्, तस्य गुणद्रव्यात्मकाऽऽनन्दः श्रीः, आनन्दपरीवाहः श्रीः, सजग्धिकेलिः श्रीः, अभिलषितसकलार्थ-सिद्धिदत्व श्रीः, कमनीयस्वरूपत्व श्री, परम दैवत श्रीः, श्रीर्ज्ञानशक्तिः, सर्वज्ञत्वलक्षणा, कारण-त्वौपयिकसर्वज्ञत्वस्वरूपा श्रीः, सामान्यविशेषोभयज्ञानवत्त्व सर्वज्ञत्व श्रीः, भक्तिरसोत्कर्षः श्रीः, सेवारसमुक्तिः श्रीः, स्वाभिप्रेत स्वामिप्रेमरसः श्रीः, स्वेष्टत्व श्रीः, श्रीविशिष्टस्तादात्म्येन परमेश्वरो निखिलेश्वरो निखिलोदयापूरणाऽऽवरणशीलश्चरमत सर्वविलयनशीलः स्वयमेव भगवान् हरिः श्रीहरिः, हरति भक्तदुरितानि समूलवासनाश्च हरिः, हरति सर्ववृत्तीरिति हरिः, हरति सर्वचेतना-मिति हरिः, हरति मुक्त्यावरणमिति हरिः, स्वज्ञानेनाऽज्ञानं कारणमविद्याप्रख्य महाऽज्ञानमिति हरिः, हरति नयति धाम्नि स्वोपासकानिति हरिः, अहरणशीलानपि हरतीति हरिः, अनाकर्षण-स्वभावानि तत्त्वान्यपि समाकर्षति हरतीति हरिः, श्रियं मायाऽऽस्वादिता हरतीति श्रीहरिः, सर्व हृत्वा व्यतिरेकेण स्वराड् विराजते इति हरिः। यस्य श्रियाऽभिलाषयाऽहकारो रिष्यतीति श्रीहरिः, श्रिया उपासनाया हन्ता यो नास्तिकभावः स रिष्यते येन परमात्मना स आस्तिकभावतनुस्वरूपः श्रीहरिः, श सुख रः सम्पत्तिः, ईः सौलभ्यसुशीलता, इहा धामगम-नेच्छा, अ अन्वयिता, रः रतिः परानुरक्तिः, इः सर्वे मन्यते प्राप्यते यत्र स श्रीहरिः, श्र

शमन शान्तिः, ईः ईश्वरेश्वरेश्वरता, हः हान हेय हानसाधन हेयसाधन च, रिः रिपु, रिपवो मित्राणि सद्गुणाः, तदात्मक तत्त्व श्रीहरिः परमात्मा, सर्वविशिष्टः, श्रियः श्रयणशीला जडाः, हः हिण्डनशीलाश्चेतनाः, रिः रतिशीलाः प्रीतिशीला रमणशीलास्तनवो यत्र सः श्रीहरिः, श्रीः चैतन्यमूर्तिक्लृतिः, हरिः प्राकृतमूर्तिविरतिः, उभे यत्र स श्रीहरिः । श्रीरक्षरब्रह्मलोकः, तत्र विहरति, यः स श्रीहरिः, परब्रह्मपुरुषोत्तमो भगवान् परमपुरुषः परस्वरूपः, सर्वनियामको व्यतिरेकी स्वराडक्षरधामाधिपतिः—एकमेवाऽद्वितीय ब्रह्मेति परब्रह्मव्याख्यातः । तस्य परमात्मनो व्यतिरेकिणो मुक्तोपास्यस्य मुक्तप्रत्यक्षस्याऽक्षरब्रह्मणा कृतसेवस्याऽक्षरब्रह्मप्रत्यक्षस्य सनातनस्य शाश्वतैकस्वरूपसन्मुदिव्यकिशोरसुमूर्तस्याऽक्षरब्रह्मधामात्मकाऽसीमा ऽ नन्तघनातिघनसुमिष्टसुरभिशीतलाऽमृतास्वादसभृतमहामहातिमहाप्रकाशाऽभिन्नाऽऽनन्दघनमूर्तेस्तस्य प्रकाशिनः श्रीस्वामिनारायणस्य प्रथितपुरुषोत्तमस्य, मूर्तिरे वाऽऽकृतिः, मूर्तिः पुरुषोत्तम एव, 'अय पुरुषोत्तम' इति प्रत्यक्षाकारनिबन्धनाऽऽकाराऽभिन्नः पुरुषोत्तमः, तस्याऽपृथक्सिद्धतादात्म्यससर्गभिन्नमपि भिन्नमिव कृत्वा तत्राऽस्मद्बुद्ध्यवरोहार्थं भेदषष्ठीप्रयोगः । नन्वाकृतिः कृत्या साध्यते ततोऽनणुपरिमाणा मूर्तिः, तस्मादाकृतिरवयवसयोगाः, सयुक्तावयवि शरीरम्, तच्च सयोगाऽनित्यत्वादनित्यमिति भगवन्मूर्तिः पररूपाऽप्यनित्या कदाचिदादिकाले साधितत्वादिति चेन्न । सयोगोऽव्याप्यवृत्तिर्द्वाभ्यामुत्पद्यते च भिन्नसजातीयद्रव्याणा सः, परमेश्वरमूर्ते रेकरसात्मिकाया आनन्दघनस्वरूपाया अवयवाऽजन्याया एकविशिष्टतत्त्वस्वरूपाया अप्राप्तिपूर्वकप्राप्त्यात्मकसयोगशून्यायाः सयुक्तावयवित्वानवच्छिन्नाया अनित्यत्वाभावात् । ननु परमेश्वरस्य स्वरूपसतोऽमूर्तानन्दघनस्याऽविकारस्य मुक्ताना च नित्यविभूत्यात्मकमूर्तिमत्तया रूपवत्त्वम् अतः स्वरूपे न परिणामापत्तिर्नवाऽमूर्तत्व नित्यविभूत्यात्मकदिव्यमूर्तिमत्त्वात् मूर्त्यात्मकरूपस्याऽऽनन्दस्वरूपस्य चाऽऽनादितादात्म्याच्छश्वत्सुमूर्तत्वमिति चेदत्र विचार्यते, भगवन्मूर्तिर्नित्यविभूतेः पिण्डाशा वा यावन्नित्यविभूतितत्त्वम् ? यावत्त्वे भगवदतिरिक्तमुक्ताना तत्पिण्डतत्त्वाद्यलाभे भवतो निराकारतापत्तिः, पिण्डभागाना सुमूर्तिमत्त्वे विभूतीना नित्यत्वेनाऽनन्तमुक्तपिण्डानां नित्यतयाऽनन्ताऽसख्ययावन्मुक्तनावत्सख्याकविभूतित्वापत्तिः, आदिमुक्ताना नित्यविभूतिशरीरवत्त्वेनैकविभूतिसमुत्थशरीरवत्त्वेन नित्याऽसख्यव्याघातेन नवीनजन्यशरीरवत्तया भवता स्वीकरणेनाऽनित्यत्वापत्तिर्दुर्निवार्या, नित्यपिण्डाना नित्यमुक्तादीना नित्यतनुत्वे च नित्याऽनित्यविभूतिद्वयापत्तिः, परमेशस्य जडविभूत्यधीननिवासापत्तिः, शरीरस्य विभूत्यात्मकस्य स्वीकारे 'आनन्दमात्रकरपादमुखोदरादि' रित्यनेन विरोधापत्तिः, द्व्यात्मकत्वस्य नित्यसाकारपरमेश्वरस्य कल्पनापेक्षयैकतत्त्वानन्दघनमूर्त्यात्मकस्य निरवद्यत्वम्, आनन्दघनतत्त्वस्यैवाऽनादिसिद्धदिव्याकृतित्वोक्तेः । अन्यथाऽनादिसिद्धदिव्याकृतिमत्त्वमिति मत्वर्थीयान्तं प्रयुञ्ज्यात् ।

अनादिनित्यसिद्धदिव्याकृतित्व न वेति विप्रतिपत्तिः, निषेधो निराकारवादिनाम्, विधिस्तद्भिन्नानाम्, सिद्धसाधनतावारणायाऽनादीति । नित्यविभूतौ तद्वारणाय सिद्धेति । त्रिगुणद्रव्ये तद्वारणाय दिव्येति । मुक्तेषु जातेषु तद्वारणाय अनिति । स्वरूपे तद्वारणाय आकृतित्वमिति । असमववारणाय आ—इति । निषेधकोटावनादिसिद्धदिव्याकृतित्वाऽभावस्य प्रतियोग्यप्रसिद्ध्याऽ-

# दिव्यत्वे मनुष्यत्वम्

प्रसिद्धत्वेऽपि अनादिसिद्धाऽज्ञानात्मकाऽविद्याया अदिव्याया तमआकृतिस्वरूपाया अभावस्य प्रसिद्धेः सिद्धसाधनतावारणाय दिव्येति । सिद्धदिव्याकृतित्वस्य सगुणब्रह्मणि सत्त्वेन तदभावस्य निर्गुणब्रह्मणि सत्त्वेन सिद्धसाधनतावारणायाऽनादीति । अनादिदिव्याकृतित्वात्यन्ताभावस्य मूलाऽविद्याया सत्त्वेनाऽर्थान्तरतावारणाय सिद्धेति । अनादेरसिद्धस्य दिव्याकृतौ तदाकृतित्वाऽभावस्य ग्रहणे आधेयसिद्ध्याऽधिकरणस्य दिव्याकृतिस्वरूपस्य सिद्ध्या विधिकोटौ फलतः प्रवेशस्तन्निवारणार्थं सिद्धपदम्, अनादिसिद्धदिव्यत्वाभावस्य मलिनान्तःकरणे सत्त्वेन तदभावस्य दिव्यत्वस्य ब्रह्मणि सत्त्वेन बाधापत्तिवारणायाऽऽकृतित्वग्रहणम् । 'स एकधा दशधा सहस्रधा भवती'त्यनन्ताऽनित्याऽनादिसिद्धदिव्याकृतित्वस्य सिद्धसाधनतावारणाय नित्येति । सर्वकालवर्तमानत्वम् । अनादित्वम् आद्यक्षणसम्बन्धिनूतनव्यवहाराऽनास्पदत्वम्, उत्पत्तिरहितत्वम्, प्रागभावाऽप्रतियोगित्वम् । ध्वंसप्रागभावौ तिराभावप्राविर्भावौ, नित्यत्वं ध्वंसाऽप्रतियोगित्वे सति प्रागभावाऽप्रतियोगित्वम्, सिद्धत्वं सिद्धिविषयत्वम्, सिद्धिः नित्यप्रत्यक्षात्मिका मुक्तानाम्, अलौकिकप्रत्यक्षात्मिका योगिनां समाधिभाजाम्, सामान्यलक्षणज्ञानलक्षणाऽन्यतरजन्या विदुषाम्, प्रमात्मिका प्रामाणिकानाम्, विवेकसिद्धिस्तत्त्वज्ञानिनाम । चैतन्यसिद्धिर्भगवत्प्रविष्टानाम् । सिद्धिः प्रमाज्ञानात्मिका यथार्था, यथावस्थितव्यवहारानुगुणज्ञानरूपा, तद्वति तत्प्रकारिका तद्वद्विशेष्यिका चेति । दिव्यत्वम्, दिवु क्रीडाविजिगीषाव्यवहारस्तुतिमोदमदस्वप्नकान्तिगतिषु, एतत्सर्वविध दिव्यत्वम्, 'सैषा दिव्यत्वस्य मीमांसा भवति तद्यथा ग्रावाऽपेक्षया काचे रत्ने शतगुणाऽच्छताऽऽरपारदर्शित्वानुगुणा निरावरणदृष्टिग्रहणस्वरूपपात्रता दिव्यता, तदपेक्षया देवमुकुटमणौ शतगुणा दिव्यता, तदपेक्षया विष्णोः कौस्तुभे शतगुणा दिव्यता, तदपेक्षया वैराजमुकुटमणौ शतगुणा दिव्यता, तदपेक्षया महाविष्णोः शिरोमणौ शतगुणा दिव्यता, तदपेक्षया महापुरुषमुकुटमणौ शतगुणा दिव्यता, तदपेक्षया मुक्तानामक्षरब्रह्मणश्च स्वरूपे स्वात्ममणौ सङ्ख्यातीता दिव्यता, एता सर्वा दिव्यताः श्रीपुरुषोत्तममूर्तेर्नखाग्रदिव्यताया निमज्जन्ति इति सर्वदिव्यत्वाधिभूमिः, यावद्दिव्यत्वपराकाष्ठीयदिव्यत्वावासः श्रीहरिरेवेति नातोऽस्य दिव्यतानामसङ्ख्याऽसीमाऽनन्तदिव्यतोद्भाविकानामिति तादृशोत्कृष्टतमदिव्यता विवक्षिता । **आकृतिः** सुघटप्रत्यक्षज्ञानारोहणयोग्यसुस्वरूपाग्राहकद्रष्टृचिच्चैतन्यवृत्तिभावभावितस्वयगोचरसमाकाङ्क्षितनर - समष्टिसमससमितता, सा च सर्वांगिपिण्डानुपिण्डिकाप्रपिण्डिकाप्रान्तपिण्डिकादिचरमपिण्डिकापर्यन्ता सुदर्शनस्फूर्तिताटात्म्यसन्नाहता, अत्र पिण्डानुपिण्डाद्या ऐहिकरीत्या मूर्त्यवगमार्था, न तु तत्राशागावयवभेदप्रयोज्ययोगिता । मूर्तस्वरूपमाकृतिः, द्रष्टृदृश्यसुघटता, नरसारूप्यमिति । अथ कथं नारीसारूप्यं नेति ?, शक्तेर्गौणत्वात्, विशिष्टस्य मुख्यस्वरूपत्वात्, वेदेषु पुरुषविधस्य वर्णनात्, श्रीहरिः परस्वरूपः परमात्मा पक्षः, तत्र श्रुत्यनुकूलतर्कस्य प्रतिष्ठानात्, यावद्युक्तोपपन्नातिसुन्दरमूर्तिः, ऊनषोडशाब्दीयाऽत्रत्यकिशोरमूर्तिरिव तथाविधयावद्युक्तोपपन्नातिसुन्दरमूर्तिः, परव्यूहविभवाऽर्चाऽन्तर्यामिस्वरूपान्यतमश्रीहरित्वं पक्षतावच्छेदकम्, तत्पक्षताव-

## मनुष्यत्वे दिव्यत्वम्

च्छेदकाऽवच्छेदेन अत्यन्तकल्पकमिद्धमपि दिव्याकृतित्व तत्सामानाधिकरण्येन साध्यते इत्यभिप्राय । अत एव धर्मात्मजस्याऽत्रोद्देश्यत्वमपि । **अथ द्वितीया** विप्रतिपत्तिः—अनादिनित्यसिद्धाऽदिव्याकृतिभिन्नाकृतित्वं न वा, मायाकृतिभिन्नविभूत्याकृतित्वाभाववान् वा । **अथ तृतीया** विप्रतिपत्तिः—'अय' (धर्मजः) अनादिनित्यसिद्धदिव्याकृतिर्न वा ?, **अथ चतुर्थी** विप्रतिपत्तिः—'दिव्योऽय मनुष्यः' इत्यनुभवः—दिव्यत्वाभाववति दिव्यत्वप्रकारको न । अदिव्यवृत्तिप्रकारको न, विशेष्याऽवृत्तिप्रकारको न, दिव्यत्वप्रकारकत्वे सति दिव्याविशेष्यको न, दिव्यत्वव्यधिकरणप्रकारावच्छिन्नो न, दिव्याऽवृत्तिप्रकारको न वा । भक्त्युपासनाद्वारकमोक्षसमर्थविषयकप्रयत्नजनकत्वे सति दिव्यत्वप्रकारकनिश्चयत्वात् । मोक्षसमर्थविशेष्यकदिव्यत्वप्रकारकनिश्चयत्वाद्वा । **अथ पञ्चमी** विप्रतिपत्ति—'मनुष्योऽय दिव्य' इत्यनुभवः—मनुष्यत्वाभाववति मनुष्यत्वप्रकारको न, अमनुष्यवृत्तिप्रकारको न, विशेष्याऽवृत्तिप्रकारको न, मनुष्यत्वप्रकारकत्वे सति मनुष्याऽविशेष्यको न, मनुष्यत्वव्यधिकरणप्रकारावच्छिन्नो न, मनुष्याऽवृत्तिप्रकारको न वा, माहात्म्यज्ञानद्वारकब्रह्मभवनस्नेहस्मेवासमर्थविषयकप्रयत्नजनकत्वे सति मनुष्यत्वप्रकारकनिश्चयवत्त्वात् । ब्रह्मभवनस्नेहस्मेवासमर्थविशेष्यकमनुष्यत्वप्रकारकनिश्चयत्वाद्वा । **अथ षष्ठी** विप्रतिपत्ति—'दिव्यो मनुष्योऽय मनुष्य' इत्यनुभवो दिव्यमनुष्यत्वाऽभाववति दिव्यमनुष्यत्वप्रकारको न, अदिव्यमनुष्यवृत्तिप्रकारको न, विशेष्याऽवृत्तिप्रकारको न, दिव्यमनुष्यत्वप्रकारकत्वे सति दिव्यमनुष्याऽविशेष्यको न, दिव्यमनुष्यत्वव्यधिकरणप्रकारावच्छिन्नो न, दिव्यमनुष्याऽवृत्तिप्रकारको न वा, शरणागतिद्वारकसारूप्यादिमुक्तिसमर्थविषयकप्रयत्नजनकत्वे सति दिव्यमनुष्यत्वप्रकारकनिश्चयवत्त्वात्, सारूप्यादिमुक्तिसमर्थविशेष्यकदिव्यमनुष्यत्वप्रकारकनिश्चयवत्त्वात् । दिव्यमनुष्यो दिव्यपरमपुरुषः । तिस्रो विप्रतिपत्तयोऽनादिनित्यसिद्धदिव्याकृतित्वमित्यनेन दर्शिताः । चतुर्थी विप्रतिपत्ति 'दिव्यत्वे मनुष्यत्व चे'त्यनेन दर्शिता । पञ्चमी विप्रतिपत्तिः 'मनुष्यत्वे दिव्यत्व' चेत्यनेन दर्शिता । षष्ठी विप्रतिपत्तिः 'दिव्यत्वे पुनर्मनुष्यत्व चे'त्यनेन दर्शिता । **अथ** 'दिव्यो न वा' 'मनुष्यो न वे'त्यपि विप्रतिपत्ती सभवतः । एवम् अग्रे वक्ष्यति—'सत्त्वादिगुणरहितत्व निर्गुणत्व च, अनादिनित्यसिद्धदिव्यगुणसहितत्व च सगुणत्वम्, च सत्त्वादिसहितत्व सगुणत्व' 'वदन्ति श्रुतिस्मृतयः',—इत्यनेनापि 'निर्गुणो न वा' 'सगुणो न वा' 'दिव्यगुणो न वे'ति विप्रतिपत्तयः सभवन्ति । एवमग्रे वक्ष्यति यत्—'सदानित्यसिद्धदिव्यविग्रहत्वात् साकारत्व हरेश्च, प्रकृतिजन्याकृतिनिर्गुणत्वात् कैवल्यार्थ्यदृश्यत्वान्निराकारत्वं, वदन्ति सूत्रश्रुतिस्मृतयः' इति, एनेनापि 'साकारो न वा, निराकारो न वा, दिव्यसाकारो न वा,' इत्यपि विप्रतिपत्तय सभवन्ति । एवमग्रे वक्ष्यति—'पुरुषप्रकृतिकालब्रह्मादीना स्रष्टृत्वात् कर्तारं परमपुरुष च, तैरनन्तकोट्यण्डोत्पत्त्यादिकारयितृत्वाद् अकर्तारं वदन्ति श्रुतिस्मृतयः',—इत्यनेन च—'सर्वसृष्टिकर्ता न वा, सर्वसृष्टिकारयिता

न वा, सृष्ट्यकर्ता न वा, पुरुषप्रकृतिकालब्रह्मादिस्रष्टा न वे'त्याद्या विप्रतिपत्तयोऽपि सम्भवन्ति। एवमन्या अपि प्रतीपव्यावृत्ता अपि सम्भवन्ति, यथायोगमेता ज्ञप्तिरूपा गुणगुणिरूपाः स्वरूपरूपाः कारणरूपाश्च योक्तव्याः।

दिव्यत्वे मनुष्यत्वे चेति चतुर्थी विप्रतिपत्तिः स्वरूपेण दर्शिता, दिव्यता श्रीहरौ परब्रह्मणि सर्वाधिकद्योतमानता स्वरूपसहजानन्दघनमूर्तौ 'यस्य भासा सर्वमिदं विभाति' ब्रह्मात्मकप्रकाशतोऽनन्तगुणितप्रकाशवत्ता सुसमधिकद्योतमानता, अक्षरब्रह्मप्रकाशं निजैकरोम्णि विलीनीकरोति भगवान् परब्रह्म, अनन्तरोमा हिरण्यरोमा मूर्तिः सम्पूर्णा ततोऽनन्तगुणितप्रकाशसम्भृता, इत्यनन्तगुणितद्योतमानता मूर्तौ दिव्यता, प्रकाशे दिव्यता, गुणेषु दिव्यता, ऐश्वर्येषु दिव्यता, सामर्थ्येषु दिव्यता, शक्तिषु दिव्यता, चेष्टासु दिव्यता, धर्मेषु दिव्यता, सर्गेषु दिव्यता, अन्वयेषु दिव्यता, चिह्नेषु दिव्यता, अङ्गेषु दिव्यता, आभूषणेषु दिव्यता, अलङ्कारेषु दिव्यता, अम्बरेषु दिव्यता, हेतिषु दिव्यता, उपकरणेषु दिव्यता, भगवन्मूर्तिनिवासा भगवन्मूर्तिसम्बन्धाः सर्व एव स्वरूपाः पदार्था मुक्ताश्चेतना दिव्या दिव्यतरा दिव्यतमा निरवधिद्योतमाना वर्तन्ते। अतो यथार्थदिव्याः मूर्त्यन्यूनदिव्याः, सारूप्ये विषमताया असत्त्वात्। भगवदिच्छया सेवात्मकव्यापारानुगुणवेषान्तरात्मका अपि मूलसारूप्याविषमा निरवधिकातिशयद्योतमानतया दिव्याः, सर्वदिव्यतानां शाश्वतनिधिर्दिव्यता, परब्रह्मश्रीहरिदिव्यता, दिव्यतासमव्याप्तसनातनत्वम्, दिव्यतासमव्याप्तमेकरसरस्यत्वम्, दिव्यतासमव्याप्तमानन्दतनुत्वम्, दिव्यतासमव्याप्तं सर्वेश्वरेश्वरेश्वरत्वम्, दिव्यतासमव्याप्तम् आनन्दघनसुस्वरूपसत्सुमूर्तत्वम्, तदनुरूपं ब्रह्मघनसुमूर्तत्वम्, तदनुरूपं मुक्तघनसुमूर्तत्वम्, तदनुरूपम् अवतारघनसुमूर्तत्वम्, तदनुरूपमीश्वरघनसुमूर्तत्वम्, तदनुरूपं ब्रह्मविष्णुमहेशऋषिमुनिपितृदेवघनसुमूर्तत्वम्, तदनुरूपं मानवघनसुमूर्तत्वम्, एतन्मानवघनसुमूर्तत्वं परम्परया भगवदनुस्वरूपानुस्वरूपत्वम्, मानवान्तेषु अक्षरब्रह्मादिषु प्रविष्टः परमात्मा 'हृदये जीववज्जीवे योऽन्तर्यामितया स्थितः। ज्ञेयः स्वतन्त्र ईशोऽसौ सर्वकर्मफलप्रदः।' इत्येवस्वरूपः एकाकारदिव्याकारपरमाकारमूलाकारव्यतिरेकाकारस्वरूपसदानन्दघनाकार एव यावत्स्वात्मतत्त्वेषु स्थितो निजान्वितात्मतत्त्वात्मकदिव्यद्रवद्रवितदिव्यैकानन्दरसघनाऽऽहितान्तर्गतनिजदिव्यसनातनाकारविशेषानुसमाकारितात्मव्रजो निजसारूप्याभिव्याप्तिमत्सर्वसारूप्यसम्पत्तिधरो निजसारूप्यतादात्म्ययावत्सारूप्याधायको निजान्विताऽभिन्नस्वरूपसच्चैतन्याकाराकारितचेतनात्मको नित्यसूक्ष्मसाकारः 'अणोरणीयानि'ति प्रदर्शितः। 'प्रतिरूपो बभूवे'ति प्रवर्णितः 'प्रज्ञानघनः' 'पुरुषविधः' 'अन्तर्हृदये पुरुषः' इत्यादिभिर्दिव्याऽतिदिव्यमहादिव्यपरमदिव्यसर्वविधदिव्यताघनद्योतमानमूर्तिर्विशिष्टो दिव्यो विशेषणानुयोगिदिव्यताविशेष्यानुयोगिदिव्यतैकस्वरूपसारूप्यतादात्म्यकाऽणव्यप्यविषमतत्सारूप्यसत्ताकः 'द्वा सुपर्णा सयुजा सखाया परिषस्वजाते' इत्यनेन सर्वविधसमतापात्रस्वरूपयोर्मध्येऽविषमस्वरूपोऽन्यतरस्वरूपो विशेषणविशेष्यान्यतरस्वरूपो विशेष्यविशेषणान्यतरस्वरूपः शरीरशरीर्यन्यतरस्वरूपः शरीरिशरीरान्यतरस्वरूपोभयतादात्म्यसमस्वरूपः कर्मफलानशान एवाऽधिकस्थितिकः स्वात्मात्मकशरीरात्मकानुविधेयस्यापि स्वसमानब्रह्मभावाविर्भावे

कर्मकल्पनयाने समस्थितिकः समसाम्यमसम्पत्तिकः परमात्मा ब्रह्मस्वरूपस्वसारूप्यान्वितात्म-साम्यवान् स्वसारूप्यमम्पन्नमुमूर्नात्मचैतन्यवनभक्तप्रसेवितः स्वरूपमद्दिव्यसाकारो भगवान् 'स्वकृतानुकृति' स्वरूपः स्वस्वरूपमाकारः स्वममानमर्वाकारानुकृताकारः सन् वेषान्तरात्मक-दर्शनविषयो विशेषाकारो नवीनविशेषाकारो मानगतो नवीनो विशेष आकारो मानवाकारः स्वाभिमतसम्मानितदिव्याकारो मनुष्याकारोऽस्मदादिदर्शनाकार. स एवाऽभिन्न इति, एकमेवा-नन्दघनतत्त्वसुरूपाकारो बहुधादिव्यवेषान्तरदर्शनाकारो मनुष्याकार इति दिव्यत्वे मनुष्यत्वम्, ओतप्रोतयथापेक्षमानवापेक्षमानववेषदिव्याकार इति दिव्यमनुष्याकारो भगवानभिन्नैकरसा-नन्दघनरस्यसुमूर्तमाकार इति प्राह श्रीगोपालानन्दमुनिवर्यो दिव्यत्वे मनुष्यत्वमिति ।

अथ धर्मोऽसामानाधिकरण्यमिति चेन्न, दिव्यत्वस्य व्यापकत्वेन व्याप्यस्य मनुष्य-वेषत्वस्यैकाधिकरण्यान्न द्वित्वापत्तिरवकाशः, परब्रह्मणः सदासाकारदिव्यव्यतिरेकपुरुषोत्तम-वेषत्वम्, तस्य कदाचित् स्वेच्छया सर्वाधारब्रह्मवेषत्वम्, क्वचिन्मुक्तमण्डलरासरमणादिनिमि-त्तकमुक्तवेषत्वम्, कदाचिन्महत्कार्यनिमित्तकाऽवतारवेषत्व ततोऽपि कदाचिद्ब्रह्माण्डसृष्टिसङ्क-ल्पननिमित्तकेश्वरवेषत्वम्, क्वचित्तु ततोऽपीत आर्षोपदेशनिमित्तकमहर्षिवेषत्वम्, ततोऽपि विशेषतः कार्यनिमित्तकपितृवेषत्वम्, ततोऽपि सात्त्विकादिकार्यनिमित्तकदेववेषत्वम्, ततश्च क्वचित् पृथिवीप्रार्थनानिमित्तकमनुष्यवेषत्व ततोऽन्याऽप्रतर्क्यकार्यनिमित्तकजलचरगगनचरवन-चरादिवेषत्वमिति मनुष्यवेषत्व भगवद्दिव्यत्वव्याप्त भगवद्गतदिव्यत्व भगवद्गतवेषत्व चैकाधि-करणकम्, भगवत्प्रदत्तदिव्यदृष्टिविषये दिव्यत्ववेषत्वे, दिव्यत्वमनुष्यवेषत्वे, मनुष्यवेषत्व चात्राऽ-क्षरपर्यन्तेभ्यो विलक्षण वेषत्वम्, आदेवेभ्योऽक्षरब्रह्मपर्यन्तमूर्तिगतमुक्तपर्यन्तेभ्यो विलक्षणवेषत्व, आपश्वादितृणान्तेभ्योऽपि विलक्षणवेषत्व, एतदुभयविलक्षणवेषत्व परब्रह्मदिव्यत्व व्यतिरेकदिव्यत्व सर्वनियामकदिव्यत्व तदेव च मनुष्यदिव्यत्व मनुष्यवेषत्व दिव्यमनुष्यवेषत्व दिव्यमनुष्यत्व परब्रह्मपुरुषत्व मनुष्यपुरुषत्व चेति, द्वयोरैक्यात्परब्रह्मत्वं मनुष्यत्वं चाभिन्नमत्र, तत एव च दिव्यत्व मनुष्यत्व चाभिन्नमत्र, व्यापकव्याप्यत्वादि तु नो दृष्ट्व्या, वेषान्तरधृतवतो नटस्येव नटत्व व्यापक व्याप्य क्षणिकराजत्व क्षणिकर्षित्वादि क्षणिकभृत्यत्व क्षणिकमनुष्यत्वादि न व्यतिक्राम्यति, तथा नटत्वमनुष्यत्वयोः स्वलक्षणविलक्षणयोर्विशिष्टव्याप्तिर्न व्यभिचरति । तद्वत् परब्रह्मत्वमनुष्यत्वयोः स्वलक्षणविलक्षणयोर्विशिष्टा व्याप्तिर्न व्यभिचरति, व्यतिरेक-परब्रह्मत्वमनुष्यपरब्रह्मत्वयोर्दिव्यपरब्रह्मत्वमनुष्यपरब्रह्मत्वयोर्दिव्यत्वमनुष्यत्वयोः परब्रह्मवेषयो-र्व्याप्तिर्न व्यभिचरतीति । नटवेषविशेषाणा नटव्याप्तेरिव दिव्यश्रीहरिवेषविशेषाणा दिव्यश्रीहरि-व्याप्तेरव्यभिचारात्, दिव्यपरब्रह्मवेषत्वदिव्यमनुष्यवेषत्वयोर्व्याप्तेरव्यभिचारात् तत्र विशेष्य-योर्व्याप्तेरिव विशेषणयोर्व्याप्तेर्विशेषणतावच्छेदकयोर्व्याप्तेरप्यव्यभिचारात्, दिव्यत्वयो परब्रह्मत्वमनुष्यत्वयोर्वेषत्वयोश्चैकाधिकरण्यात् एकव्यक्तित्वनिरूपकस्य व्याप्यव्यापकभावस्य षट्स्वपि यत्र क्वापि सत्त्वात् दिव्यत्वमनुष्यत्वयोः दिव्यत्वपरब्रह्मत्वयोर्दिव्यत्ववेषत्वयोः, परब्रह्म-त्ववेषत्वयोः, मनुष्यत्ववेषत्वयोः दिव्यत्ववेषत्वयोर्मनुष्यत्वदिव्यत्वयोः, दिव्यत्वदिव्यत्वयोः परब्रह्मत्वयोः सर्वथैव व्याप्तेरव्यभिचारात् ।

नन्वेकव्यक्तिवृत्तिधर्माणां व्याप्त्यनवकाश इति चेन्न, तदभावाऽवृत्तित्वस्याऽवकाशत्वात्। अथ वेषान्तरेषु व्यधिकरणत्वमिति चेन्न, शीतस्पर्शस्य नीहारतुहिनकासाराऽभ्रमेघवृष्टिपूरसागरादौ तद्गुणस्य व्यधिकरणत्वाभावात्, समवायिकारणजन्यत्वस्य समवेतकार्याधिकरणत्वस्य तदविषयत्वात्, निरवधिकानन्तैश्वर्यशक्तिशालिनः परमात्मनो वेषान्तरो न स्वरूपे तदाकारभिन्नतानियोजकः, कम्? किन्तु दर्शकवृत्तिषु तत्तदाकारोद्भावकः, वेषाऽऽकाराऽनैक्येपि वृत्त्याकाराऽनैक्यमिति सृष्टितनुखनिगोलकानैक्यात्। स्वयमाह च भगवान्—महासरोवरे निमग्नस्य समर्थस्य यथेष्ट तत्रैव परितो दूरेऽन्यत्र वा प्रकाशे निस्सरणवत् अक्षरधाम्नि स्थितस्य परब्रह्मणस्तत्रैव वा ब्रह्माण्डेषु यत्रेष्ट तत्र तत्र तन्मूर्त्यैवाऽऽनन्दघनस्वरूपेण स्वेन निःसरणं, न मनागपि मूर्तौ वैवर्त्यं, अथ तर्हि दर्शकानां दृष्टिरेव तत्र सुस्थिरा स्याद् यथा, तथा तत्तत्स्वरूपवेषानुकूलदृष्टिसम्पादकत्वं, दृष्ट्यनुकूलवेषप्रवर्तनम्, वेषानुकूलदृष्टिसम्पादनम्, दृष्टिर्यथा पात्रीभूता तथा दृष्टौ वेषाधानमेति, तस्मात् परब्रह्मदिव्यता मनुष्यदिव्यता समैव, दिव्यत्वं मनुष्यत्वं सममेव वेषत्वेनाऽभिन्नमिति। दिव्यत्वे मनुष्यत्वमिति मुनेरभिप्रायः।

अथ मनुष्यत्वमिति जातिसृष्टिप्रयोगः, स च न दिव्यत्वात्मकगुणसहचरः, तथा च कथं व्याप्तिरिति चेत्? इत्थम्। दिवु व्यवहारे स्फुरणात्मके सकल्पेऽर्थे प्रवर्तते, 'एकोऽहं बहु स्यामि'तिसंकल्पवत्त्वं दिव्यत्वम्, मनुः मन्त्रो मननं सकल्पः 'एकोऽहं बहु स्याम्' इत्यनेन सहैव 'प्रजायेय' इति सृष्टौ च 'मनुष्यो भवेय' इति संकल्पवत्त्वं सकल्पानुस्वरूपवेषत्वं मनुष्यत्वम्, तथा च यत्र सकल्पस्तत्र वेषः, यत्र सकल्पवत्त्वं तत्र वेषवत्त्वं यत्र सकल्पात्मकदिव्यत्वं तत्र सकल्पसाहित्यात्मकमनुष्यत्वम्, इत्येवं पारिभाषिकदिव्यत्वमनुष्यत्वयोः सकल्पवत्त्वसकल्पानुरूपमनुष्यवेषवत्त्वयोर्व्याप्तेरेकाधिकरणे सम्भवात्, दिव्यत्वे प्रथमे सति ततो मनुष्यत्वमिति परब्रह्मण एव पारिभाषिकोभयं 'यः परब्रह्म सोऽत्र मनुष्यः' इति ऐक्यव्याप्तेः सध्रीचीनत्वेन प्रतिपत्तिविषयत्वात् न जातिसृष्टिप्रयोगापत्तिः, किन्तु परब्रह्मप्रयोग एव दिव्यत्वे सति मनुष्यत्वमिति। एतच्च श्रुतिस्मृतिभिरग्रे स्फुटीभविष्यति।

वस्तुतस्तु—मनुष्यैः निजस्वरूपस्वरूपिते परमेश्वरे शास्त्रैर्दिव्ये ज्ञाने नैत्रादिभिर्मानवे ज्ञानेऽभिन्नपिण्डे परब्रह्मणि प्रयुज्यते 'दिव्योऽयं मनुष्य' इति, तेन दिव्यत्वे सति मनुष्यत्वं मुख्यातमेव, द्योतमानताप्रयुक्तं दिव्यत्वं मनुष्यवेषप्रयुक्तं मनुष्यत्वं चेत्युभयमेव गुणवेषप्रयुक्तं सुवचम्।

अथ **मनुना**—मन्त्रेण 'एकोऽहं बहु स्यामिति' सकल्पेन '**सच्च** त्यच्चाऽभवत्'—'**स्यच्च** त्यच्चाऽभवत्' मनुना स्यच्च मनुष्यः, त्यच्च दिव्यवेषः स एव स्यच्च मनुष्यवेषः। स एव सकल्पवान् श्रीहरिः परमात्माऽत्र निजेष्टलोके निजेष्टसेवकेषु निजेष्टसुरूपवेषवान् स्यामिति कृत्वा मनुष्यवेषोऽभवत्, ततस्तत्र परब्रह्मणि मनुष्यत्वं दिव्यत्वं द्योतमानसुयथेष्टरमणीयवेषत्वं समानमेव तादात्म्येन व्याप्तमिति। ततो ब्रह्मलोके **त्यच्च** दिव्यवेषो भगवान् अत्र स्यच्च मनुना सकल्पेन मनुष्यवेषो भगवान् अभवदिति दिव्यत्वे सति मनुष्यत्वं सुस्थम्।

अथ पञ्चमी विप्रतिपत्तिः—मनुष्यत्वे दिव्यत्वमिति। अथ मनुष्यत्वं मनुजन्यसजातीया-

## दिव्यत्वे पुनर्मनुष्यत्वम्

कारसृष्टित्व मानवत्वम्, तच्चेत् ? कर्मफलानुकूल 'मध्ये रजोविशाला' इति स्मृतेः राजममानुपव्रज, तर्हि व्यभिचरति दिव्यत्वे नन। अथाऽन्यादृगम् भगवदैच्छिक स्वीय मानुपवेपत्वम् पारिभाषिक विलक्षग वक्ष्यमाणश्रुतिस्मृत्यनुरोधादिति चेत् ?, अत्र किमुद्देश्यत्व ? मनुष्यत्व चेत् ?, वैयधिकरण्यात् दिव्यत्व बाध्येत, अथ मनुना स्वसकल्पेन स्यत्त्व मनुष्यत्व पारिभाषिकं भगवद्वेषव्यासाङ्गिमनुष्यत्वमुद्देश्यत्वम् इति चेत् ?, स्वरूपाऽसिद्धिः, साधकहेतोरभावात्। अथ श्रुतेरेव हेतुत्वमिति चेत् ?, शाब्दबोधविषयत्वेऽनुमानानुपपत्तिः। अथ विप्रतिपत्तेः शाब्दिकत्वेनेष्टापत्तिरिति। पूर्वमुद्दिष्टत्वस्य विधेयत्वे विपरीतसशयाधायकत्वेन चतुर्थविप्रतिपत्तेरनास्थापत्तिः। न च पक्षतावच्छेदकसशयनिवारणार्थं तत्साधने नाऽनास्थापत्तिरिति चेत् ? तर्हि तत् पूर्व सिद्ध न वा ?, साधित चेत् सशयाभाव, असाधित चेत् पूर्वविप्रतिपत्तेरेव श्राव्यम्, एतस्या अस्थानापत्तिः। अथ पात्रभेदेन विप्रतिपत्तिर्भिन्ना, ग्रन्थैक्येऽपि तत्तदीयविषयताया भेदात् नाऽनास्थापत्तिः। तथाहि—शास्त्रदृष्टीना भगवति दिव्यत्व निश्चितम्, मनुष्यत्व सन्दिग्धम्, तत्साध्यते। अथाऽशास्त्रदृष्टीना मनुष्यत्व निश्चितम्, दिव्यत्व सन्दिग्धम्, तत्साध्यते। इत्येव भिन्नाधिकारित्वेन विप्रतिपत्तिभिन्नत्वेनोपन्यासोऽसापेक्ष इत्यदोषः। अथ शास्त्रैकदेशदृष्टिमतो दिव्यत्व सिद्धमेव, मनुष्यत्व साधितम्, अथ तर्हि दिव्यत्व तदवस्थ वा विलीनमित्यपि पुनरुत्थानमतित्व जायते, तस्यार्थं मानुपत्वेऽपि पूर्वानुस्यूततदवस्थमेव दिव्यत्वमिति साधनार्थं विप्रतिपत्तिर्युक्ता, दिव्यत्व शाश्वत मनुष्यवेपत्व नान्तरीयकत्वमिति ज्ञापनाय मनुष्यत्वे सति दिव्यत्वस्य प्रतिपत्त्यर्थकवाक्यस्यानुधावनात्, अथ वीप्सया दिव्यत्वं 'शाश्वत चेत् मनुष्यत्वमपि वीप्सया शाश्वतम्' इति चेन्न। दिव्यत्व प्राक् निश्चित श्रुत्या, मनुष्यत्व च साधितम्, साधिते एव तस्मिन् वर्तमाने सन्देहनाशार्थं दिव्यत्व शाश्वततया साध्यते, तथा च दिव्यत्व सिद्ध साधित च, मनुष्यत्वं तु साधितमेव न तु सिद्धम्, इति न वीप्साऽवकाशः, वीप्सया न विप्रतिपत्तिनिरोधः। ततः सूपपन्ना विप्रतिपत्तिर्मनुष्यत्वे दिव्यत्वमिति। एव च भगवति द्योतमानतायाः सकल्पेन मानववेपतायाश्च श्रुत्यैव प्रतिपाद्यतया तादात्म्यसमव्याप्तत्व शाश्वतमिति व्यक्तिविषयताभेदभिन्नताशकावकाशोऽपि निरवकाश इति। अथ षष्ठी विप्रतिपत्तिः—दिव्यत्वे पुनर्मनुष्यत्वमिति। अत्र पुनःपद प्राग्गत मनुष्यत्व स्मारयति, दिव्यत्वाऽव्यभिचरितमनुष्यत्व यत्र तत्र मनुष्यत्वमिति नियमः। मानवदिव्योऽय मानव इति तु न, साध्यपक्षतावच्छेदकयोरैक्यात्। 'दिव्यमनुष्योऽय मनुष्य' इति,—दिव्यमनुष्यत्वे मनुष्यत्वम्, द्योतमानस्य सकल्पकृतवेपस्य मनुष्यत्वमिति न वीप्साभय न वा पुनरुत्थानत्वदोष, अत्र मनुष्यत्वमिति वामनादिधन्वन्तरिमोहिन्यादिवारणाय। द्योतमानस्येति परमेश्वरसग्रहाय। संकल्पकृतवेपस्येति कर्माधीनदेवादिवारणाय। दिव्यसंकल्पितवेपोऽय मनुष्यत्ववान्न वेति, विधिकोटिः श्रीहर्याश्रितानाम्, निषेधकोटिरर्थच्छलिनाम्। शब्दोऽत्र मनुष्यत्वाभाववान्। तदर्थः—राजसप्रधानकर्मवत्त्व मनुष्यत्वम्, कर्मभूम्यूत्तमयोनित्व मनुष्यत्व,

## बृहन्नारायणोपनिषदि—

मनुवशत्व मनुष्यत्वम्, कर्माऽधिकारित्व मनुष्यत्वम, एकविधसर्गत्व मनुष्यत्वम्, 'मानुष-कश्चैकविधः' इति साख्यात्, 'कर्मण्येवाऽधिकारस्ते'ति गीतावाक्यात्। 'मनुतो मानवा जाताः' इति मन्वन्तरप्रकरणात्। 'चतुरशीतिलक्षयोनिषु मानवाः श्रेष्ठा' इति भागवतविवेचनात्। 'मध्ये रजोविशाल्या' इति कारिकातश्च। दिव्यपरब्रह्मण्येतेषामर्थानामभावात, तथाविधमनुष्य-स्वाभाववानिति। इति तदर्थच्छलिनः पक्षः। अथ तर्हि कोऽर्थोऽच्छलः?, अत्र भगवति मानुषानुकरणशीलोपवेषत्वम अच्छलत्वम्। लाक्षणिकमेतन्मनुष्यत्वम्। दिव्यत्वविशिष्टा-दस्मात् एतस्य विशेषो यः कर्मठमानववन्निगूढोऽदिव्यत्वाभासोऽत्र सर्वसौशील्यसर्वसहमील-नसारः सर्वविधाश्रितानुकरणपाटवात्मक इति। तथा च यो दिव्य. सोऽत्र दिव्यमानवः, योऽत्र दिव्यमानवः स तत्र दिव्यमानवदिव्य', यस्तत्र दिव्यमानवदिव्य' सोऽत्र दिव्यमानवदिव्यमानवः, अत्र वस्तुनो दिव्यत्वयोरभेदात् मानव वयोरभेदात् दिव्य वमानवत्वयोरभेदाच्च 'अय परब्रह्मेति' अपरोक्षानुभवसिद्धिः। 'अत्राऽय भगवॉस्तत्र प्रातव्य' इति महाविधिवाक्यबोधेन स्वरूप-निर्णयस्वरूपसाक्षात्कारस्वरूपोपसम्पत्तिस्वरूपस्नेहसेवनमुक्तिस्वरूपसम्प्राप्तिप्रभृतयो निष्पद्यन्ते इति ग्रन्थरचनोपास्त्यायासमहाफलमत्र परम प्रयोजन शाश्वत विजयते।

अत्रार्थे श्रुतिस्मृतय। वदन्तीत्युद्घोपयन्ति—भगवान् परब्रह्मदिव्य' परस्वरूप', स एव दिव्यपरस्वरूपो मानवस्वरूपः, स एव दिव्यपरस्वरूपमानवस्वरूपो दिव्यपरस्वरूपः, स एव दिव्य-परस्वरूपमानवस्वरूपदिव्यपरस्वरूपो मानवस्वरूपः, तथा च समानाधिकरणमेकाधिकरण दिव्यत्व परस्वरूपत्व मानवस्वरूपत्व दिव्यपरस्वरूपत्व दिव्यमानवस्वरूपत्व च मिथ इति। चकारत्रयम् एकत्र समवेतधर्मषट्कार्थबोधकम्। दिव्यत्व मानवत्व दिव्यमानवत्व मानवदिव्यत्व दिव्या-कारत्व मानवाकारत्व चेति। स्वानधिकरणानधिकरणत्व पट्के वर्तते, द्योतमानमानवमूर्तित्व-मिति फलबोधः। द्योतमानता गुणः, मानवता वेषः, मूर्तिता मूलस्वरूपता, विशिष्टमूर्तिर्भगवानिति निदिध्यासितव्यः, द्योतमानता प्रकाशो ब्रह्म, मूर्ति. परब्रह्म, मानवत्व सर्वात्मकत्वस्मारकम्,— एकमेवाऽद्वितीयमित्यनेनैकार्थ्यदर्शकम्, एकम्—व्यतिरेकस्वरूपेणाऽवस्थित सर्वनियामक परब्रह्म सुमूर्तम्। एव—अवतारादिव्यावर्तक एवकारः (आदिना मुक्ताः), अद्वितीयम्—ईश्वर-जीवादिव्यावर्तकमद्वितीयपदम्। (आदिना माया) अथावशिष्ट यदत्र दृष्टिविषय मानववेष स्वरूप सर्वदृष्टिगोचर तद् अन्वयि, यत्रेच्छति यथेच्छति यादृगिच्छति, यदर्थमिच्छति येन यस्मादिच्छति तत्र तथा तादृक् तदर्थे तेन तस्मात् सुवेष दृश्यते इत्येतादृश यद्व्यापकत्वं बृहत्वं तज् ज्ञापक सामान्यविशेषज्ञापक ब्रह्मपदम्, तथा च योऽक्षरे धाम्नि व्यतिरेकस्वरूपो यावन्नियामकः सुदिव्यसुमूर्तः स सामान्यविशेषमानवपुरुषः परब्रह्माऽयं दर्शनविषयः श्रीस्वामि-नारायणः परमात्मा ज्ञातव्य इति। सृष्टिप्रारम्भे त्वेतद्वाक्यस्य कारणतानुगुणोऽर्थः। अत्र विप्रतिपत्तिषु तु स्थितिसमनुगुणोऽर्थः। नैतावता वाक्यभेदप्रसगः, श्रुतिद्वयहृदयस्योपलंभात्। समानानुपूर्वीमन्तो मुक्ता इव समानानुपूर्वीमत्य. श्रुतयोऽपि यथाप्रसग परमात्मान बहुधा

**'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण स र्मि'ति ॥ १ ॥**

---

वदन्तीति सूचनार्थमुक्तम्—**वदन्तीति** । श्रुतयः—भगवत्सरस्वत्यः, स्मृतयोऽपि भगवदुपदेशिन्यः, सर्वा अपि भगवद्वाण्यः, बहुस्वेष्टस्वरूपभगवन्तमेव वदन्तीति ।

अथ श्रीहरेरनादिसिद्धदिव्याकृतित्व दर्शयन्त्या श्रुत्या दिव्यपरमूर्तस्वरूपत्व सर्वान्वितसामान्यविशेषपूर्णपुरुपस्वरूपत्व चात्राऽपि प्रत्यक्षपुरुपस्वरूपत्व च प्रवर्ण्यते । **बृहन्नारायणोपनिषदीति** बृहन्नारायणः परब्रह्मपरमात्मा श्रीस्वामिनारायण. परमात्मा, बृहत् सर्वपर , सर्वव्यापकः सर्वनियामकः, गुणस्वरूपस्वभावसामर्थ्यैश्वर्यशक्तिप्रभृतिभिः सर्वाधिको बृहत् , सर्वस्वामी बृहत् , स्वामित्व नियामकत्वम् , शरीरित्व च, एतादृश एक एव परमात्मा श्रीहरि', नराणा समूहो नारम् , 'आपो नारा इति प्रोक्ताः आपो वै नरसूनवः । तत्र तस्याऽयन यस्मात्तेन नारायणः स्मृतः,' ॐ आपो ज्योतिः रसाऽमृत ब्रह्म, नारा ब्रह्म तत्राऽयन ब्रह्मायनो भगवान्नारायणः, नार नृहृदय तत्राऽन्तर्यामी भगवान्नारायण', आपः आर्द्रीभावो दया तद्वत्सु सत्सु अयन यस्य स नारायण', नो निस्तारो वेदशास्त्राणि, अरः निर्वेग मानसम् , तत्र तत्राऽयनवान् नारायणः, ना चेतनवर्गः रा क्षेत्रात्मिका सम्पत्ति' शक्तिर्माया, तेषु तास्वयन यस्य स नारायण., नरमिव सार्वज्ञ्यमाचरतीति नरमिव ब्रह्मव्रतमाचरतीति नारायणः, नरेण ब्रह्मशीलसाधुव्रतेन सहाऽयनो नारायणः, नारासु भक्तिमद्व्यक्तिषु अयते स नारायणः, नारा शरणागतिः तत्राऽयते नारायण', नार माया तस्या अयो विधिरस्तित्वं यत्र तत्र नास्तीति नारायणः, नास्ति आरा माया यत्र तत्राऽयते स नारायणः, नृमात्रे ब्रह्मलोकेऽयन यस्य स नारायणः, नृजन्म शास्त्र तत्र रमतेऽयते च नारायणः, नार नृचिह्न शकरस्तत्र स्नेहेनैकात्मतया वर्तते स नारायणः, नार बल स्वत्व तद्वान् स्वामी अथ चाऽयनेऽथ च साधुस्वरूपः, स स्वामिनारायणः परमात्मा, स बृहन्नारायणः परमपुरुषः, तस्य उप समीपे वासदात्री विद्या सती विद्या परा विद्या सा बृहन्नारायणोपनिषत् । एतादृशनिजब्रह्मविद्याया निजात्मान स्वयमेव भगवान् दिव्यमानववेष दर्शयति—**वृक्ष इवेत्यादिना** । 'एको ह वै नारायण आसीदि'त्यनेन परब्रह्मपरमात्मा बृहन्नारायणो निरूपितः, 'वेदाऽहमेत पुरुष महान्तमादित्यवर्णं तमसः परस्तादि'त्यनेन दिव्यपरमपुरुषः स एव परमात्मा प्रोक्तः, कल्याणस्वरूपोऽय भगवान् स्वेच्छया करुणया च देवमनुष्यादिसस्थानवेष दर्शयतीत्याह—'अजायमानो बहुधाऽभिजायते' । 'न भूतसघसस्थानो देहोऽस्य परमात्मनः' ( म० भा० उ० प० ) । 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुष ब्रह्मयोनिम्' । 'परात्पर पुरुषमुपैति दिव्यम्' । 'दिव्यो देव एको नारायणः' । 'यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु' इत्यादिभिर्दिव्यो द्योतमानमूर्तिः परमात्मा श्रीहरिः किशोरपुरुषविध आनन्दमात्रकरपादमुखोदरादिरानन्दघनःस्वरूपसत्साकारः स्वय परमात्मा दिव्यमानववेषः कल्याणस्वरूपः प्रतिपाद्यते ॥ **( तैत्ति० आर० प्र० १० अनु**—१०–३ ) इत्यत्र स्थितेय श्रुतिः 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेद पूर्णं पुरुषेण सर्वमिति' । १ । अनया सर्वान्तर्यामित्वबोधयन्त्या श्रुत्या श्रीहरेरनादि-

## तैत्तिरीयोपनिषद्वाक्यमेतत्

नित्यसिद्धदिव्याकृतिरपि बोध्यते—दिवि दिव्येऽक्षरे धाम्नि एकः परमेश्वरः परमपुरुषः पुरुषाकारः स्तब्धो नित्यस्थिरः कदापि तद्धिष्ण्यं न त्यजतीति तथाविधः सदायतनः सन्नेव तिष्ठति विराजते. अत्रत्यं निदर्शनं स्तब्धः समूलस्थिरो महावृक्षः 'स्वस्थानवर्तीव वर्तते', यद्वा वृक्ष इति पारिभाषिकं वृ—वर्धते तत्र तिष्ठन् सन्नेव बहुस्वरूपोऽनेकसृष्टिषु दृश्यते क्षः क्षयं लयं तिरोभावं चापि प्रयाति, बह्ववतारैः स्वरूपसदृशैर्दृश्यते पुनर्न दृश्यतेऽपि चेति । तदुक्तम् 'अजायमानो बहुधाऽभिजायते' इत्यनेन स्वेच्छया करुणया वा देवमनुष्यादिसस्थानवेषात्मकत्वमिति । अत्रार्थे—इवेति स्तब्ध इत्यत्राऽन्वेति, स्थिरोऽव्यापार इव—अत्यन्ताऽव्यापारा स्थितिम् इवाऽर्थः सादृश्यं निवार्य काचित्सव्यापारा देवमानवादिवेषावतरणात्मिका स्थितिं सर्वत्राऽन्तर्यामितया स्थितिं च निवेदयति । यद्वा दिवि दिव्योऽव्ययार्थः, वृक्षः सर्वशरीरी, स्तब्धः—कार्यकारणात्मकः शाश्वतः, एकः विशिष्टस्वसमानाऽपररहितः पूर्णपुरुषो विराजते पूर्णब्रह्मविशिष्टः, तेन पूर्णब्रह्मविशिष्टेन स्वामिना परमपुरुषेण इदं स्थूलतया यत्किञ्चिन्मतिगोचरं व्यष्ट्यात्मकं तत् सर्वं समष्टिरूपं नैकजातीयविशेषणत्वैरवगतमपि शरीरत्वेन सह व्याप्त्या सर्वत्वेनाऽवगतम्, यद्यद् व्यष्टितयाऽवगतं तत्तत् समष्टितया सर्वत्वेनाऽवगतं यावत्, तेन साकारेण परमात्मना पूर्णमिति व्याप्तमिति । अथ कथं परिच्छिन्नो व्याप्नोति ?, समर्थत्वात् . कथं सामर्थ्यम् ?, इत्थम्—सूर्यस्तेजोभिः सर्वसंयुक्तः, स चाकाशे दूरः, पृथिव्यां तु तत्तेजांसि व्याप्तानि, पृथिवीपटलेऽब्जाऽऽदर्शाः स्थापिताः स्युस्तत्र पतितानि तेजांसि आहत्य पर्यावर्तमानानि निजतनुष्वब्जानि सन्दानि सूर्यप्रतिफलनानि रचयन्ति, दृश्यन्ते चक्षुष्मद्भिस्तानि, अतः सूर्यतेजस्सु प्रत्यणु प्रत्यणु सूक्ष्मसूर्या वर्तन्ते साकारा अदृश्या अपि दृश्या जायन्ते मन्दस्वरूपा यथापात्रानुस्वरूपाः, तथा भगवानपि स्वप्रकाशात्मकव्यापकप्रकाशात्मकधामनि सर्वत्र वर्तते साकार एक एव स सूक्ष्मो यथापात्रं प्रद्योतमानो बहुधाऽपि दर्शनविषय इति । एवं वृक्ष इत्यनेन सिद्धस्वरूपम्, स्तब्ध इत्यनेन नित्यस्वरूपम्, इवेत्यनेनाऽनादिस्वरूपम्, दिवि इत्यनेन दिव्य स्वरूपम्, एकस्तिष्ठतीत्यनेन सगुणसलीलपुरुषाकृतिश्च सूच्यन्ते, पुरुषेणेतिपदबलात्, तेनाऽनादिनित्यसिद्धदिव्याकृतिपुरुषश्रीहरिणा धाम्नि वर्तमानेन इदं शरीररूपं भिन्नं भिन्नं मायिकं चेतनसृष्टिमिश्रितं स्थूलं सर्वमनवशेषं यावद् व्याप्तं पूर्णं प्रपूरितं तेनाऽन्वितं तत्सत्तया सुजीवनं तदस्तित्वेनाऽस्तितावत्, तथा च सर्वत्र दिव्याकृतिरेव पुरुषोत्तमो विराजतेऽतो निषेधकोटिः पराभिमता निरस्ता । तथाहि—भवन्मते केयमाकृतिर्यदभावः परब्रह्मणि मन्यते । निराकारे ब्रह्मणि अज्ञानात्मकाऽविद्याकृताऽऽभास एवाकृतिरन्तःकरणावच्छेद्या इति । अत्रेदं विचार्यते भवन्मते केयमाकृतिर्यस्या अभावः परब्रह्मणि वर्तते ?, निराकारपरब्रह्मणि अनाद्यज्ञानात्मकाऽविद्याकृताऽध्यासेनैवाऽऽकृतिरन्तःकरणाऽवच्छेद्या स्वाप्नवन्मिथ्या मिथ्याभूतजीवात्मना जीवात्मभूतब्रह्मणा स्वेनाऽध्यासेन दृश्यते इति । अथ केयमविद्या ?, यत्कृताध्यासेन भवद्-

भिमतनिराकारपरब्रह्मणि मिथ्यासाकारता, अविद्यानाशेऽध्यासनाशाच्च पुनर्निराकारतेति। सदसद्विलक्षणा मिथ्याऽनादिनी निराकारपरब्रह्माऽऽवरणिकाऽध्यासोत्पादनेन परब्रह्मण्येवेश्वर-जीवादिभावमापादयन्ती परब्रह्मस्वरूपापादकविद्यानिवर्त्या मिथ्याभूतेति। अत्र विचार्यते—भवदभिमताऽविद्यैव न सिद्ध्यति, इयं मिथ्या कथमनादिनी ?, मिथ्यात्वमस्याः स्वरूपे ? वा ताटस्थ्ये ? स्वरूपे चेत् ! मिथ्यात्वमुपपादनीयम्, अतथास्वरूपत्वं मिथ्यात्वमिति चेत् ?, विकल्पबाधिता सा सिद्ध्यनास्पदा। अथ विकल्पात्मिका सा भवदङ्गीकृता नो मतेति चेत् ?, विकल्पस्य स्वरूपशून्यत्वात्। अथाऽज्ञानमेव स्वरूपमिति चेत् !, किम् अभावरूपं तत् ?, असम्भव, भावरूपं चेत् मिथ्यात्वाभावः, अज्ञानस्याऽपि स्वस्वरूपेऽज्ञानत्वेन तथास्वरूपत्वात् अतथास्वरूपत्वाऽभावात्। किञ्च—मिथ्यात्वं स्वयं मिथ्या चेत्! न स्वाश्रयं मिथ्ययति, अमिथ्या चेत्! स्वाश्रयम् अमिथ्ययति, ततोऽविद्या न मिथ्या। अथ मिथ्यात्वस्य मिथ्यात्वार्थम् अन्यमिथ्यात्वस्याऽपेक्षैव तत्तदूर्ध्वमिथ्यात्वपरम्पराऽनवस्थापातात्, तथा च स्वरूपे मिथ्यात्व-स्याऽसिद्धिः, यदि नाऽपेक्ष्येत मिथ्याया मिथ्यात्वं तदाऽध्यासोऽपि दोषाऽनपेक्षः स्यात्। अथ ताटस्थ्ये चेत् ?, तटम् अन्तःकरणम्, तत्र चेत् मिथ्यात्वम्, तदवच्छिन्नत्वं परब्रह्मण्य-सम्भवि, तटस्थस्य स्वरूपेऽभावात् तत्राऽमिथ्यात्वस्य कदाऽप्यनिवर्त्यत्वेन जीवेश्वराणां स्वरूप-भूतानां नित्यससारापत्तिः, अर्थात् पारमार्थिक्या तस्या भवदप्रसिद्धान्तापातः। अथ मिथ्यास्वरूपमनादि चेत् ?, क्षणध्वंसि तत्, अमिथ्याक्षणाऽलाभात्, क्षणध्वंसिनाऽव्याप-केनाऽधिष्ठानं परब्रह्म व्यापकं शाश्वतम् आव्रियते इत्यसम्भवि, श्रुत्युक्तजीवेश्वराणामनादित्वेऽप्य-विद्याकल्पितत्वेऽविद्याया अनादिन्या अपि अविद्याकल्पितत्वेऽनवस्थाया अविश्रामात्, प्रपञ्चमात्रे मिथ्यात्वार्थम् अविद्याया अपेक्षा चेत्, अप्रपञ्चे तदनपेक्षणात् परब्रह्मतो जीवेश्व-राद्यनुद्भवात् मिथ्यात्वादेरप्यसिद्धेः। अथ जगदुपपत्त्यर्थमेवाऽधिष्ठानेऽविद्यादोपकल्पनमिति चेत् ?, जगदुपपत्तेरधिष्ठानात् सूक्ष्मात् स्थूलावस्थात्मिकाया उत्पत्तेरेव श्रुत्या स्वीकारेण तु अविद्याकल्पनाऽनौचित्यात्। जीवेश्वरमायानां नित्यत्वबोधकश्रुतिविरोधादेव दूरोत्सार्यं मिथ्यात्वमाभासत्वमाविद्यकत्वमविद्या चेति। अथ 'नाऽसदासीन्नो सदासीत् तदानीं तम आसीत्'। 'अमृतेन हि प्रत्यूढाः'। 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतिभिः सदसद्भि-न्नाऽनिर्वचनीया तमःस्वरूपाऽनृता मिथ्या मायाऽविद्या प्रवर्ण्यत इति चेन्न, महदादीनां कारणावस्थं प्रधानं तम उक्तम्, न तन्मिथ्येति, मायाभिरित्यपि मायाजन्यतत्त्वैस्तदनुरूपैः स्वेच्छावेषैर्बहुस्वरूपो भगवान् भवतीति न तत्र माया मिथ्येति। अनृतैरित्यपि स्वस्वप्रति-कूलकर्मभिः क्षयिभिर्युक्ताः प्रजा इत्यर्थः, ततो न मिथ्यात्वं मायाया प्रमाणम्। सदसद-निर्वचनीयत्वं तु उक्तश्रुत्या भवदभिमतं मायामृगादिष्वव्याप्तम्, नहि कालविशेषे सदसतोः प्रतिषेधेन तत् सिद्ध्यति, काले सतः परब्रह्मणः सत्त्वात्, शशशृंगस्याऽसत्त्वान्निषेधाऽ-नुपपत्तेः, सदसद्भ्यां व्यावहारिकप्रातिभासिकप्रतिक्षेपे तु तव तमसः पारमार्थिकत्वं तुच्छत्वं वाऽऽपतेत्। अतः सदसद्भ्यां व्यष्टिचेतनाऽचेतनयोर्विलयो निवेद्यते। एतद्रीत्या 'अनादि-

मत्परं ब्रह्म न सत्तन्नासदुच्यते' इत्यनेन परब्रह्मणोऽप्यनिर्वचनीयत्वं कथं न स्यात्, ततो नाऽनिर्वचनीयाऽविद्यासिद्धिः ।

**अथ** 'अहमज्ञो मामन्यं च न जानामी'ति प्रत्यक्षम् अविद्याया प्रमाणम् 'अज्ञान्यहं मन्मदितराऽज्ञान्यिहम्' इति ज्ञानम् । अत्र ज्ञाने आत्मा मदन्योऽज्ञानं च विषयाः, सविषयं ज्ञानं भावरूपम्, अज्ञाने च—अहं मदन्यश्च विषयौ, सविषयम् अज्ञानम्, तस्माद् भावरूपम्, न भावद्वययोर्विरोधो ज्ञानसुखयोरिव, किन्तु प्रमाणभूतज्ञानोदयेनाऽज्ञाननिवृत्तिरिति ।

तन्न । अज्ञाने विषय आत्मा मिथ्या वाऽमिथ्या ?, मिथ्याविषयकस्य मिथ्यात्वादप्रमाणम्, अमिथ्या विषयश्चेत् ?, असम्भवः, मिथ्यात्मभिन्नस्य ब्रह्मणो विषयत्वाऽभावात् । अथ तद्विषयाऽवच्छेदेनाऽज्ञानप्रत्यक्षस्याऽस्य तद्विषयावच्छिन्नज्ञानाभावविषयकतयाऽज्ञानसिद्धिरिति चेन्न । ब्रह्मणोऽप्रत्यक्षात्, निराकारे ब्रह्मणि प्रत्यक्षाभावात्, न तेनाऽज्ञानसिद्धिः, अविद्यारूपाऽज्ञानाऽभावाच्च तदाभासाध्यासेन जीवेश्वरसिद्धिः, तथा च सर्वमेव भवदभिमतमसिद्धमिति, प्रत्यक्षाऽप्रवर्तनात् तन्मूलकानुमानाद्यपि न ब्रह्मणि प्रवर्तते, ब्रह्मणोऽविषयत्वेनाऽनुमेयत्वाऽभावाच्च । मम तु आत्मा नित्योऽणुर्ज्ञाता ज्ञानवान् 'अहमि'ति प्रकाशते, तत्र सत्तया मानं ज्ञानमेवेति, तेनाऽऽत्मा गृह्यते, अहमिति विशिष्टज्ञानं शरीरशरीरिविषयं विशिष्टमेवोपासनया साक्षात्करोतीति, नाऽज्ञानकल्पना, सर्वज्ञानानां सत्त्वादेव यथार्थत्वादेवेति । 'स्वयमपीतो भवती'ति तुर्यावस्थादौ स्वं जाग्रदाद्यवस्थाभोगसम्भृतं न जानामीति भोगाद्यनवगाहपरकज्ञानस्य सत्त्वात् तथाविधप्रत्यक्षस्य निर्वाहात् ।

अथाऽनुमानम्—'प्रमाणप्रभा स्वनिवर्त्य–भावान्तरपूर्विका, अपूर्वार्थप्रकाशिकात्वात्, प्रथमदीपप्रभावत्' । 'प्रमाणप्रभा स्वप्रागभावभिन्नस्वविषयकाऽऽवरकस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्विका, अपूर्वार्थप्रकाशिकात्वात्, अन्धकारस्थाऽऽद्यदीपप्रभावत्' । अनेनाऽज्ञानसिद्धिरिति चेन्न ।

ब्रह्मव्यतिरिक्तयत्किञ्चित्सविषयायाः प्रमाणप्रभायाः पक्षाऽसिद्धत्वात्, ब्रह्मव्यतिरिक्तत्वेनाऽऽत्मनस्तदानीमभावात्, भावे वा तत्र ज्ञानाऽभावस्याऽवगमेनाऽज्ञानात्मकभावस्याऽसिद्धेः, ब्रह्मस्वरूपज्ञाने सति वा तदज्ञानस्य निवर्त्यस्य तत्र सम्भवाऽभावादेव तदसिद्धेः । निराकारे ब्रह्मणि प्रभाया अभावादेव तद्गोचरीभूताऽज्ञानात्मकभावस्याऽप्यभावात् । किञ्च—पक्षे वृत्त्यवच्छिन्नचैतन्ये बाधात्, वृत्तौ तु त्वन्मते जडायाम् अज्ञाननिवर्तकत्वाऽसम्भवेन बाधात्, वृत्तेः स्वपूर्वतत्त्वज्ञाने स्वविषयाऽऽवरकत्वाऽभावेन वृत्तौ बाधात्, चैतन्यमात्रेऽपि स्वविषयाऽऽवरकवस्त्वन्तरपूर्वकत्वाऽभावेन बाधाच्च चक्षुषोरपि अप्रकाशितार्थप्रकाशकारणत्वेन व्यभिचाराच्च, दीपप्रभाया ज्ञानकारणेन्द्रियानुग्राहकत्वादेव प्रकाशक(कारण)त्वाभावाद् दृष्टान्ताऽसिद्धिः, भागाऽसिद्धिः, इन्द्रियेष्वनैकान्त्यं च । 'अहमज्ञ' इति प्रत्यक्षेण प्रकाशितार्थस्य भावात्मकस्याऽज्ञानार्थस्य प्रकाशत्वेनाऽस्याऽनुमानस्य वैयर्थ्यापत्तिः । अप्रकाशिताऽर्थप्रकाशने एतदनुमाने साध्याभावेऽनैकान्त्यम्, पुनः साध्यान्तरेऽज्ञानान्तरसिद्धिः, एवमेवाऽनवस्थाऽज्ञानसिद्धीना

पूर्वपूर्वानुमाने पश्चपश्चानुमानेनापत्तिः, तथा सति अज्ञानस्याऽन्यज्ञानेन ब्रह्मस्वरूपाऽवृत्तत्वेन साक्षित्वमेव ब्रह्मणोऽपगच्छेत्। साक्षित्वे वा ब्रह्मणो ज्ञानवत्त्वे सिद्धे भावात्मकाऽज्ञानकल्पना व्यर्था, अज्ञानेऽज्ञानाऽन्तरसिद्धिपरम्परयाऽनवस्थाया ध्रौव्यमिति नानुमानं तन्निर्दोषम्। किञ्च—अविद्यासम्बन्धस्य ब्रह्मण्यसम्भवात्, जीवभावपूर्वस्य तस्य बाध्यत्वादेव ब्रह्मणि ब्रह्मस्वरूपज्ञानेन निवर्त्यस्याऽज्ञानस्याऽभावादेवाऽध्यासद्वारकजीवेश्वरादिकार्यैकब्रह्मकारणत्ववादो निर्मूल इति।

अथ 'सर्वमपि साकारमि'ति व्याप्तः सिद्धान्तः, दिव्ये दिव्याकारा अदिव्येऽदिव्याकाराः, चेतने चेतनाकारा अचेतनेऽचेतनाकाराः, विशिष्टस्य परब्रह्मणः स्वरूपसतो ज्ञानानन्दघनदिव्याकारस्य तत्प्रकाशस्य धाम्नः सेवकस्यापि दिव्याकारत्वात् मुक्तानामपि दिव्याकारत्वात् मायाया अपि जडाकारत्वात्, ईश्वराणां जीवात्मनां मायातत्त्वानामपि सूक्ष्ममध्यमादिपरिमाणवत्तया साकारत्वात्, परमाणूनां चापि साकारत्वात् सर्वमेव साकारमिति। परिमाणगुणश्चतुर्विधोऽणु ह्रस्वः दीर्घः महांश्चेति, मध्यमपरिमाणा यथास्वरूपं सम्पन्नाः,

मानवाः साकाराः प्रत्यक्षगम्याकाराः, आकारः संस्थानघटना भौतिकेषु, गुणादिघटनाऽमूर्तेषु, अधीनावृत्तताऽऽधेयेषु, परिच्छिन्नस्वरूपता सपरिमाणेषु, आश्रिताश्रयत्वमाधारेषु, मिथः सत्तावत्त्वम् अपृथक्सिद्धेषु, विपर्य्यारोहित्वं पदार्थेषु, व्याप्याधीनत्वं विशेषणेषु प्रतिफलनवत्सु स्वच्छेषु, अप्रतिहतप्रवेशवत्त्वं दिव्येषु, क्रियावत्त्वं मूर्तेषु, आकर्षणशक्तिमत्त्वं समर्थेषु, अन्तर्यामित्वं विशेष्येषु, प्रभावत्त्वं द्योतमानेषु पारवर्तित्वं व्यष्टिसमष्टिषु, इत्येता अगूढा गूढा ग्राह्याकारा धार्याकारा भाग्याकाराश्च यथायथं यावत्सु तत्त्वेषु वर्तन्ते तास्तास्तत्स्वरूपाकृतयः, करपादादिमत्त्वं मनुष्यपशुपक्षिसरीसृपवृक्षतृणवल्ल्यादिषु प्राणिषु अवयवसंस्थाना आकृतयः, पृथ्वीजलतेजोवायुषु पुञ्जपरिमाणवत्त्वानि आकृतयः, गगनस्य शब्दाधिकरणतयाऽऽकृतिमत्त्वम्, शब्दादीनां स्वाधारावच्छेद्यतया भिन्नेन्द्रियग्राह्यतयाऽऽकृतिमत्त्वम्, ज्ञानादेरात्मन्येव वासाद्वाकृतिमत्त्वम्, आत्मनां जडव्यावृत्ततयाऽऽकृतिमत्त्वम्, चैतन्यप्रभाकृतिः। अणुपरिमाणस्य जीवात्मनो हृदवच्छिन्नत्वमाकृतिः, अन्तःकरणावच्छेद्यत्वमाकृतिमत्त्वम्, मनआत्मनोर्योगात्परमाण्वोरिवाऽऽकृतिमत्त्वम्, त्रिगुणाश्रयत्वेन मायाया आकृतिमत्त्वम्, आत्मसु स्थितत्वेनाऽन्तर्यामिणः साक्षिणश्चाऽऽकृतिमत्त्वम्, नित्यानन्दत्वेन व्यावृत्तो भगवान् सर्वान्वितो भिन्न आकृतिमान् 'यदा पश्यः पश्यते रुक्मवर्णम्' इत्यनेन द्रष्टा दृश्यं चाकृतियुक्तम्, ब्रह्मणोऽविद्ययाऽध्यासेन वा जीवेश्वरभावापन्नतावादिमतेऽपि अवस्कन्द्याकृतिमत्त्वम्, विप्रतिपन्नाकारप्रतिस्पर्धिस्वरूपस्याऽपि तथाविधाकृतिमत्त्वम्, संसारेणाऽपि साकृतिना साध्यते निजकारणस्य सारूप्येण वैरूप्येण वा समानाकृतिमत्त्वं विषमाकृतिमत्त्वम्, क्रियाजातिधर्मगुणसत्त्वशक्तिसामर्थ्यैश्वर्यप्रतापाऽभावादिपदार्थानामर्थत्वेन व्यावृत्तत्वेन चाकृतिमत्त्वं ब्रह्माण्डावाशस्याऽवकाशरूपाकृतिमत्त्वं चिदाकाशस्य विधारणशक्तिमत्त्वेन भासा भासकत्वेन भासितत्वेन च तथाविधाकृतिमत्त्वमिति, स्वाप्नेष्वपि विमर्शोपादानकत्वमाकृतिमत्त्वम्, नाश्यनाशक-

भावापन्नत्वमाकृतिमत्त्वम्, एक एव ब्रह्मेति स्थितिर्ब्रह्माकृतिस्ततो द्वितीयता द्वेधाऽऽकृतिस्ततो बहुधा सर्वाकृतय इति, निर्वचनीय तथात्वे साकृतिमत्त्वम् अथाऽतथात्वे त्वनिर्वचनीय निजत्वे साकृतित्व द्वयोर्भिन्नतया सिद्ध्यति विरुद्धस्वरूपाकृतिमत्त्वमिति 'रूप रूप प्रतिरूपो बभूवे'त्यनेन सर्वाकृतिर्ब्रह्मेत्यपि प्रतिपक्षिमतसिद्धम्, 'एकमेवाऽद्वितीय ब्रह्मे'त्यनेन व्यावर्तकविशेषणाऽभावार्थकब्रह्मात्मकनिजस्वरूपनित्यज्ञानानन्दात्मकाकृतिमत्त्व सच्चिदानन्दत्वमाकृतिमत्त्व 'स ऐक्षते'तीक्षणवत्त्वाद्याकृतिमत्त्वम्, प्रकृतिप्रत्ययादिनिष्पन्नपदवाच्यविशिष्टपदार्थत्वमाकृतिमत्त्वमेवेति न किमपि विनाकृति वर्तते, ब्रह्म सर्वत्र भास्तु भातीति भान भात भासको भा च सर्वमपि साकार ज्ञान ज्ञेय ज्ञाता ज्ञप्तिश्च सर्वमपि निजनिजस्वरूपेषु साकारमेव, तथा च—अनादिसिद्धनित्यदिव्याकृतित्वस्यैव सर्वत्र सत्त्वेन तदाकृतित्वाभाववत्त्व निषेधकोऽव्याश्रितानामलीकमिति सर्वमनवद्यम् ।

अथ भवतो ब्रह्म जीवेश्वराद्यात्मक यदा येन सम्पन्न तदा येन सम्पन्न तत्करण जानाति न वा ?, नित्यज्ञानस्य तस्याऽज्ञाने जडेन को विशेषो ज्ञानवत्त्वाभिमत्त्या, चार्वाकवदेव सर्व निर्वहेत्, अथ जानाति ज्ञानस्वाभाव्यात्, तदा प्रमाणपूर्वा सा ज्ञप्तिर्मिथ्या तर्हि तद्वत्त्वेन ब्रह्मणो मिथ्यात्वम्, यद्यमिथ्या तर्हि तद्विषयेण सत्येन केनचिद् भाव्यम्, सत्य वस्तु सत्या ज्ञप्तिः सत्यो ज्ञाता, सर्वेऽप्यमिथ्याः, ज्ञप्तौ सत्यत्वेन विषयसत्यत्व सत्यस्वरूपाऽऽकृतिरेव, ज्ञप्तिज्ञातृत्वेन विषयिसत्यत्व नित्यप्रत्यक्षद्रष्टाकृतिरेव, तथा च सिद्ध 'स ऐक्षते'तिश्रुत्या परब्रह्मणः साकारत्व दर्शनवत्त्वादिभिरिति । सूक्ष्म च बहुभवन विषयीकृत सूक्ष्माकार साकार तत् स्थूलाकार प्रजातमिति श्रुत्यैव प्रतिपाद्यते परब्रह्मणो ब्रह्मणश्च साकृतित्व तत एव तथाविधाकृतित्वाभाववत्त्वस्य निरास इति ।

अथ साकारनिराकारब्रह्मपरब्रह्मात्मेश्वरनेजःप्रभृतिशब्दा प्रकृतिप्रत्ययसमुदायस्वरूपाः समुदित विशिष्टार्थमेव सविशेष बोधयन्ति, न त्वविशेषम्, तथा च गुणगुणिसमुच्चये पदार्थे स्वरूपधर्मा आकृतयः, निर्विकल्पक ज्ञानमपि प्रथमपिण्डग्रहण सस्थानाद्यननुवृत्तिविषयकं तदेव पुनः सस्थानाद्यनुवृत्तिविषयक सविकल्पक तयोस्तत्तदाकाराऽवर्जनीयत्वात् साकारत्वम्, निर्विकल्पके इत्थभावस्य सत्त्वात् । सकलेतरव्यावृत्तवस्तुसस्थानविशेषविशिष्टव्यावृत्तिप्रतीतिकत्वाच्च 'नैकस्मिन्नसभवात्' ( २।२।३१ ) इति सूत्रेणापि अनेकधर्माणामन्योन्यतादात्म्याभावात् ब्रह्मस्वरूपमात्रपरताया असभवस्य दर्शितत्वात् विशिष्टस्य बोधकत्वेन वेदान्तवाक्याना साकारतापरत्वमेवेति । प्रत्यक्षस्य मानसप्रत्यक्षस्य सविकल्पकप्रत्यक्षस्य च सविशेषविषयकग्रहणरूपत्वात्, निर्विकल्पकस्याऽननुवृत्तसविशेषविषयकग्रहणरूपत्वात्, अनुमानस्य सविशेषविषयकसम्बन्धविशिष्टग्रहणरूपत्वात्, प्रमाणान्तराणामपि सविशेषसदृशधर्मादिसमन्वितग्रहणरूपत्वात्, प्रकृतिप्रत्ययार्थान्विताऽभिधेयार्थग्रहणरूपत्वात्, बाल्मूकादिज्ञानानामपि परिच्छिन्नवस्तुग्रहणरूपत्वात्, ब्रह्मेति तदितरानवच्छिन्नत्वाद्यनुस्यूतवस्तुविषयग्रहणरूपत्वात्, निर्विकल्पकस्य एकक्षणवर्तिप्रत्यक्षीयस्वक्षणमात्रस्थितवस्तुभेदरूपतत्सस्थानरूपजातिधर्मादि-

ग्रहणरूपत्वात् क्षणान्तरीयग्रहणाऽनपेक्षणाच्च, शब्दाना सविशेषपदार्थबोधकत्वात्, निर्विशेष-सन्मात्रग्राहित्वे मानवश्रृगिपतत्र्यादिबोधवैलक्षण्य न स्यात्, स्वयप्रकाशत्वस्य स्वसत्तयैव स्वाश्रयाय प्रकाशमानत्वस्य धर्मधर्मिभावसिद्धत्वात्। अनुभूतित्वस्य वर्तमानकालीनस्वसत्ताक स्वाश्रयानुप्रकाशमानत्वात्, स्मरणानुमानागमयोगिप्रत्यक्षादीना भूतभविष्यविषयकत्वात्, तथा च सर्वपदार्थाना स्वाकृतिविशिष्टत्व स्वरूपसतोऽपि साकारत्व न त्वसाकारत्वमिति। सकोचविकासावस्थादिमत्त्व साकृतित्वमिति।

वर्णयन्ति च श्रुतिस्मृतिसूत्राद्याः परमात्मान साकारमिति शिक्षापत्र्याम् 'स श्रीकृष्ण. परं ब्रह्म भगवान् पुरुषोत्तम.' इत्यनेन साकारता दर्शिता। श्रुतयः 'यः सर्वज्ञः सर्ववित्' 'तदैक्षत बहुस्या प्रजायेयेति' 'स ईक्षत लोकान्नु सृजा इति' 'नित्यो नित्याना चेतनश्चेतना-नामेको बहूना यो विदधाति कामान्' 'तमीश्वराणा परम महेश्वरम्' 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच' 'एष आत्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपास. सत्यकामः सत्यसकल्पः' 'यतो वाचो निववर्तन्तेऽप्राप्य मनसा सह' 'आनन्द ब्रह्मणो विद्वान्' 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' 'अथ यदिदमस्मिन् ब्रह्मपुरे दहर पुण्डरीक वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्' 'तस्मिन् कामाः समाहिताः' 'वेदाऽहमेत पुरुष महान्तमादित्यवर्ण तमस. परस्तात्' 'य एषोऽन्तराऽऽदित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यास पुण्डरीकमेवमक्षिणी' 'स एषोऽन्तर्हृदये आकाशस्तस्मिन् पुरुषो मनोमयोऽमृतो हिरण्मयः' 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' 'मनोमयः प्राणशरीरो भारूप. सत्य-सकल्प आकाशात्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः' 'परात्पर पुरुषमुपैति दिव्यम्'। 'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तम.। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम.'। 'उत्तमः पुरुषस्त्वन्यः परमात्मा उदाहृतः' 'क्लेशकर्म-विपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः'। 'स्वरूपाविर्भाव. स्वेनशब्दात्' 'लोकवत्तु लीला-कैवल्यम्'। इत्याद्या दिव्यमूर्तिमत्त्वे प्रमाणानि, सगुणसाकारत्वे प्रमाणानि, दिव्याकारत्वे च प्रमाणानि।

'वृक्ष इवे'त्यादिश्रुत्या श्रीहरेरनादिनित्यसिद्धदिव्याकृतित्व पुरुषाकारत्वम् अक्षर-ब्रह्मलोके नित्यस्थिरवर्तमानत्वम् अनेवसृष्टिषु स्वरूपसदसख्याऽवतरणवेषवत्त्व देवमानवादिवेषत्व सर्वान्तर्यामित्वं शरीरिणस्तस्य शरीरभूतव्यष्टिसमष्टिस्थितिकत्व सर्वत्र दिव्याकृतिपुरुषोत्तम-विराजमानत्व च प्रतिपादितम्। प्रसगतः—आकृतिसम्पादिकाऽविद्यायाः, मिथ्यात्वस्य, अज्ञानस्य, च परमताभिमतस्य निरासो निषेधकोटेश्च निरासः कृतः, स्वतन्त्रसिद्धान्तस्य सर्वसाकारात्मकस्याऽऽविष्करण सयुक्तिक प्रतिपादितम्, प्रमाणज्ञानाना तज्जन्यप्रमाणाना श्रुत्यादीना च विशिष्टार्थाकारबोधकत्व च प्रवर्णितम्॥

## योऽक्षरे सञ्चरति यमक्षरं न वेदेति । २ ।

अथ सुकिशोरदिव्यपुरुषोत्तमस्याऽक्षरब्रह्मलोके यथेष्ट सञ्चरतो मुक्तेषु विचरतोऽक्षर-ब्रह्मणाऽपि यदन्तो न प्राप्यते तथाविधित्वमनया श्रुत्या वर्ण्यते इति सा श्रुतिरुपन्यस्यते 'योऽक्षरे सञ्चरति यमक्षर न वेदेति' ॥ **यः**—श्रीहरिः परब्रह्म परमात्मा परमपुरुषः साकार-दिव्यकिशोरमूर्तिः सर्वत्र प्रवर्ण्यते, स भगवान्। **अक्षरे**—निजाऽक्षरब्रह्मलोके, यथेष्ट मुक्तमण्डलेषु मुक्तानां रमणार्थं सञ्चरति, मुक्ता अपि जक्षन्तः क्रीडन्तो रममाणा भगवता सह वर्तन्ते, तेऽश्नुवते सर्वान् कामान् सह ब्रह्मणा विपश्चिता, प्रतिमुक्तं समसारूप्यादि-किशोरो भगवान् विहरति, मुक्तेच्छापूरका भवति, सर्वानन्दप्रदो भवति, सञ्चरण सर्वविध-दिव्यलीलाकरणम्, यथाऽत्र मानवेषु सर्वचेष्टो भगवाँस्तथाऽक्षरब्रह्मलोकेऽपि सर्वदिव्यचेष्टो भगवान् विचरति, स्वधिष्ण्यमत्यजन्नेव प्रतिमुक्त विचरति, सम्राडिव स्वभक्तेषु रमते भक्ताँश्च रामयति, भक्तास्त रामयन्ति रमन्तेऽपि च, द्वयोरिच्छयोरेकप्रवणिकतया महानन्द-प्रदत्वमिति। अक्षरधाम्नः सर्वान्वयित्वेन मायिकाऽमायिकयावल्लोकेषु यथापेक्ष निजाक्षर पुरस्कृत्य मानवादिस्वरूपवेषः सन्नपि सञ्चरति, स परमात्मा श्रीस्वामिनारायणभगवान् धार्मिकः सन्नसञ्चरत्, दिव्यमानववेषोऽयमभवत्! सर्वत्र सञ्चरन्तं रमन्तं विहरन्त स्वामिन सेवकोऽ-क्षरधाम वेद, यदा तु स भगवान् स्वसेवकेनाऽक्षरेण सह सर्वात्मना रमते, अक्षरधाम च सर्वात्मना स्वामिना रमते, द्वयोः रमणयोरैक्यप्रावण्ये, मिथःप्रवेशेऽन्याऽप्रवेशे, सत्यपि विधारणेऽन्यत्रस्नेहाऽप्रवेशे, तत्समसामयिकसृष्टिगतभक्तलीलारमणवति मानवादिवेषे परमात्मनि स्नेहाऽप्रवेशवतोऽक्षरब्रह्मणोऽवेदनत्व भक्तवेषाऽनुगुणसुवेषस्य रममाणस्य भगवतो निजवेदनाऽविषयत्वात्मकाऽन्यथाकारपरायणस्य वर्ण्यते श्रुत्या—**यमक्षरं न वेदेति**। अति-स्नेहेन यत्र प्रवेशो सत्यैक्यम्, सर्वविधज्ञातृत्वार्पणम्, तत्र तदितरतो ज्ञातृत्वविनिवर्तनम्, एतदवस्थायामक्षरब्रह्म य परमात्मान न वेद। यद्यप्यक्षर ब्रह्म सर्वज्ञम्, तथापि परमात्मनो महिमबाहुल्यमेतद् यदक्षरब्रह्मण. सार्वज्ञ्य भगवदनिच्छया क्वचित् भगवन्त नाऽऽक्रमते इति। 'तान्यह वेद सर्वाणि न त्व वेत्थ परन्तप' इति नरस्य नारायणात्मकत्वेऽपि सर्वावता-राऽवेदन भगवता प्रोक्तम्, तथा श्रुत्या परब्रह्मात्मकस्य ब्रह्मणोऽपि परब्रह्मयाथात्म्याऽवेदन प्रदर्शितम्, नैतावता ब्रह्मणस्तावदशे वेदनशून्यत्वम्, किन्तु यत्र यत्र ब्रह्मवेदन व्याप्नोति तत्र तत्र ततोऽत्यतिरिच्यते परब्रह्मस्वरूपस्वभावैश्वर्यगुणकर्मप्राविर्भावादीति। यद्वाऽक्षर विलीनीकृत्य स्वराट्स्थितौ परमात्मान प्रति नाऽक्षर वेदनसमर्थमित्यपि घटते। वस्तुतस्तु परमात्मा गुणैश्वर्यशक्तिप्रकाशाद्यन्वितो विशिष्ट परमबृहत्तत्त्वम्, तस्य प्रकाशस्य शरीरस्य सेवकस्य पुरुषविधस्य तन्न्यूनस्थितिकस्य तस्मिन् पुरुषोत्तमे नियामकत्वाऽभावात् तदाश्रयाऽन्यत्र व्यापकत्वात् पुरुषोत्तमे त्वव्यापकत्वात्, अक्षरब्रह्मज्ञानस्य पुरुषोत्तमज्ञानाधीनज्ञानत्वात्, अक्षरे मूर्तस्वरूपे पुरुषोत्तमस्य साक्षादन्तर्व्यापकविराजमानत्वात्, अक्षरधाम्नो द्विविधस्यापि

## 'यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः' ( २।१५ )

श्रीपुरुषोत्तमप्रभावात्, श्रीपुरुषोत्तमे यावद्भावस्वरूपे उक्ताधिक्यभावेऽक्षरब्रह्मणोऽप्रवृत्त्यंशोऽवेदनं मनागपि यत् स्यात् तच्छ्रुतिर्वर्णयति—यमक्षरं न वेदेति। यम्—तत्तदाधिक्यस्वरूपं किञ्चिन्मात्रं वा बहुलं श्रीहरिं सदुर्वरितं परब्रह्म न वेदाऽक्षरब्रह्मेति सुविवेचनम् ॥

अत्रार्थे तत्सजातीयाः श्रुतिस्मृतयः—'योऽक्षरे तिष्ठन्नक्षरस्याऽऽन्तरो यमक्षरं न वेद यस्याऽक्षरं शरीरं योऽक्षरमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः'। 'योऽक्षरमन्तरे सञ्चरन् यस्याऽक्षरं शरीरं यमक्षरं न वेद'। 'अक्षरात्परतः परः'। 'क्षरं प्रधानममृताऽक्षरं हरः। क्षरात्मना विशते देव एकः'। 'अक्षरं ब्रह्म परमम्'। 'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः'। 'क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' ॥ इति ॥ 'अक्षरात्खल्विमानि भूतानि जायन्ते'। 'यस्याऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, लोका लोकपालाश्च अक्षरे ओताश्च प्रोताश्चे'ति। इति च। एताः सर्वाः यथाऽर्थं तच्छ्रुत्यर्थप्रतिपुष्टिकारिण्यः। 'अक्षरम् अम्बरान्तधृतेः' इति सूत्रमपि परमेशस्य धाम्नि धाम्नश्च सर्वाधारत्वं दर्शयति।

भगवान् श्रीहरिः परब्रह्म साकारः सुमूर्तो यथाऽक्षरे धाम्नि नित्यप्रत्यक्षदृष्टिर्विराजते, तथाऽत्र भूतलेऽपि नः सन्निधौ धर्मात्मजः प्रत्यक्षोऽलुप्तप्रत्यक्षदृष्टिर्विराजते, यथा दृश्यस्तथाऽदृश्योऽपि प्रत्यक्षदृष्टिर्निकटे सर्वदिक्षु सर्वथा मय्यपि च साकारमूर्तिरेव विराजते पश्यति मां जानाति मदीयं सर्वमाचरणम्, सम्राट् साक्षादिव विराजते इत्येवं यस्य माहात्म्यं तस्य कस्या अपि विधाया मर्यादाया लोपाचरणं न भवेदित्यतो भगवन्माहात्म्यं दिव्यसुमूर्तस्य प्रत्यक्षसुमूर्तस्याऽदृशसुमूर्तस्य निकटवर्तिनो ज्ञातव्यमित्यभिप्रायेण मूलाक्षरब्रह्म स्वयं मानवावतारं स्वोपदेशवाक्ये परब्रह्ममाहात्म्यं दिव्यमानवाकारस्य निकटवर्तित्वात्मकं माहात्म्यं स्वयमाह—**यो वेत्तीति** 'यः परब्रह्म परमात्मा स्वरूपसन् दिव्याऽऽनन्दघनमूर्तिरक्षरधाम्नि प्रत्यक्षो विराजते सर्वं साक्षात्पश्यति सर्वमेकक्षणावच्छेदेन प्रत्यक्षं पश्यति सर्वविषयकविशेषज्ञाता सर्वविषयकसामान्यज्ञाता च' 'यः सर्वज्ञः सर्ववित्' भवति, स एव परमात्माऽत्र दिव्यमानवस्वरूपोऽपि धर्मजो **यः** सोऽयं सर्वं निजं निजाक्षरं निजमुक्तान् निजमाया निजेश्वरान् निजजीवान् निजशरीराणि स्थूलसूक्ष्माणि निजानि दृश्यान्यदृश्यानि निजानि गुणधर्मक्रियाविभूत्यैश्वर्यसामर्थ्यशक्त्यादीनि सर्वाणि, **युगपत्**—समक्षणावच्छेदेन विशेषत्वेन सामान्यत्वेन च केवलान्वयित्वेन यावत्त्वेन समष्टित्वेन व्यष्टित्वेन विशिष्टत्वेन विशेषणत्वेन संसर्गत्वेन विषयत्वेन विषयित्वेन ज्ञानत्वेन ज्ञेयत्वेन ज्ञप्तित्वेन ज्ञातृत्वेन च प्रत्यक्षीकरोति, हस्ताऽऽमलकमिवाऽऽरपारं पश्यति, **वेत्ति**—प्रत्यक्षीकरोति, नित्यप्रत्यक्षदर्शी वर्तते, कालं देशं वस्तु सर्वमपि यथावत्त्वेनाऽत्र दिव्यमानवस्वरूपः सन्नपि, **प्रत्यक्षेण**—प्रत्यक्षप्रमाणेन प्रत्यक्षात्मक-

## अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृज इति ॥

निजसाक्षात्कारेणाऽधिगच्छति पश्यति, परमात्मनो नित्यप्रत्यक्षात्मकज्ञानमेव ज्ञातृत्वमेव प्रमा प्रमाणं प्रमितिरिति नामभाक् नाऽस्मद्वद्वृत्तिप्रख्यमिति । त्रिकालप्रत्यक्षदर्शित्व कालेन भगवज्ज्ञातृत्वस्याऽनवच्छेदात् सर्वकालीनसर्वदेशीयसर्वस्वरूपसर्वतत्त्वीयसर्वीयप्रत्यक्षदर्शिनेति सूचनार्थोक्त **सदेति**—यत्र कालावच्छेदा नास्तीति तथाविध शाश्वत सनातन प्रत्यक्षमिति क्षणसम्बन्धानवच्छिन्न प्रत्यक्षमिति । अथाऽऽत्मा स्ववृत्त्या चक्षुरधीनो बहि. पश्यति मनोद्वाराऽन्तःप्रपश्यति बुद्धिद्वारा भोगात्मक प्रपश्यति, नाऽद्वारक किमपि प्रत्यक्ष भवत्यस्य, यत्त स्वय स्वेन स्व पश्यति स्वस्वरूपाऽवस्थानतया, तत्तु अद्वारक स्वचैतन्येन स्वात्मकप्रदीपेन पौरुषेय बोध बोधस्य च स्वम् आत्मान बुद्धमेव तदात्मक. स एव स्व पश्यति, स्वसाक्षिण चान्तर्यामिण चापि ज्ञातृस्वरूपदीपेन योगाभ्यासेन पश्यति, परमात्मान स्व आत्मा स्वात्मनि ज्ञानज्ञातृस्वरूपेण सविषयेण स्वेन दीपेन स्वस्थित पश्यति, तथाऽद्वारकः सन् पश्यति, परमात्मा तु स्व स्वव्याप्य ब्रह्म स्वस्थितगुणादीन् स्वव्याप्यब्रह्ममुक्तपुरुषप्रकृतितत्सृष्टिचेतनेश्वरजीवादिसमष्टिव्यष्टिपदार्थान् अद्वारकमेव स्व एव वेत्ति प्रत्यक्ष स्व एव स्वात्मक पश्यतीत्याह—**स्वेन** इति । स्वस्मात् स्वेन स्व स्वो जानातीति द्रष्टा दृश्य दृष्टि. दर्शनप्रमा च स्वयमेव विशिष्ट स्व जानातीति । उपासकस्यापि 'एकविज्ञातेन सर्व विज्ञात भवति,' तर्हि तस्य तु सुतरा सर्व स्वत एवाऽपरद्वारकमेव परद्वारकरहितमेव विज्ञान वर्तत इति, तथा च नित्यप्रत्यक्षदर्शित्वेन नित्यकार्यसंकल्पवत्त्व नित्ययत्नवत्त्व कर्तृत्व सर्वकर्तृत्व परब्रह्मणि शाश्वतमेवेति अक्षरब्रह्मोक्तश्रुत्याऽनया व्यञ्जितम् । "यथा श्रीजीमहाराजो यथा सन्तश्च यादृशाः । तादृशान् यदि जानीयात् ज्ञातव्य नाऽस्य शिष्यते ॥ येन ज्ञाता हरिः सन्तो बोधः स्यात्तस्य कीदृशः ?" 'यो वेत्ति युगपत्सर्व प्रत्यक्षेण सदा स्वतः' ॥ (वार्ता–प्र० २।१९ ) ॥ 'एव माहात्म्ययुग्बोधस्तस्य स्याच्छ्रीहरेः सताम् । मर्यादा नैव लुम्पेत् स साक्षात् स्थितहरेर्भयात् ॥' इत्येव श्रीगुणातीतानन्दस्वामिकृतवार्ताग्रन्थे प्रदर्शितम् ( २।१९ ) ॥

अथ श्रीहरे. परब्रह्मण. साक्षाद्दिव्यपरमपुरुषत्व परनारायणत्व सूक्ष्मचिदचिद्विशिष्टकारणत्व स्थूलसृष्टिविषयकसकल्पवत्त्व स्थूलचिदचिद्विशिष्टकार्यत्व सृष्टिविषयस्थूलशरीरात्मकप्रजान्वितत्वं प्रजासु च स्वस्यापि किशोरपुरुषवेषत्व च तेषा प्रतिपादनार्थ श्रुतिमुपन्यस्यति–'**अथ** पुरुषो ह वै नारायणोऽकामयत प्रजाः सृज' इति । पुरुष. परमपुरुषः किशोरदिव्यसाकाराऽऽनन्दघनस्वरूपसन्मूर्तिः स्वय निजाक्षरधाम्नि विराजमानः स एव बृहन्नारायणः सर्वनारायणाना नारायणः ब्रह्मणोऽपि परब्रह्मनारायणः सर्वेश्वरेश्वरेश्वरः परमात्मा सर्वात्मा सर्वत्र सूक्ष्मयावन्निवसितः सूक्ष्मयावच्छरीरी कारणकारण परमात्मा सूक्ष्मचिदचिद्वस्थजडचेतनविशिष्ट. कारणावस्थ. परमात्मा **अकामयत**–सकल्पं स्थूलचिदचिद्विशिष्टस्वात्मककार्यात्मकभवनविषयक कार्यानुयोगिन समपादयत्, सकल्पो नित्यज्ञानात्मकः सूक्ष्मोऽपि सृष्टिं विषयीकृत्य स्थूलभावोऽभवत् । का

चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि ॥ ४ ॥

सृष्टिं किं स्थूलम् ?, प्रलयाऽनवस्थाक्रान्तत्वमिति । ननु किमाक्रान्तम् ?, **प्रजा इति ।** प्रकर्षेण भेदभावेन व्यष्टितया जायन्ते स्वस्वसंस्कारप्रकृत्यनुसारेण प्राक्सृष्टिकालीनस्वभावानुसारेण आविर्भवन्ति स्थौल्यमापादयन्तीति प्रजाः, पूर्वसृष्ट्यनुरूपाः परब्रह्माकृत्यनुकृतयः प्रजास्तत्रापि यथापेक्षं जडचेतनात्मिका आककरिकाऽऽतृणान्ताः प्रजाः । सृजे इति । अहं मा प्रजास्वरूपं स्थूलप्रजात्मकं दर्शये, विशेषणानि मिथो दर्शनवन्ति स्थूलानि यथा स्युस्तथा सम्पादये इति स्वस्याऽनुप्रवेशं विना सर्जनमनुपपन्नमिति सृष्ट्यनुप्रविष्टमपि मानवेषु प्रत्यक्षमपि मानववेषं मा सृजे इत्यपि बोध्यम् । एतादृश्योऽन्या अपि श्रुतयः—'अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति अथाऽऽपः ससृज्य नारायणाद् ब्रह्मा जायते नारायणाद् रुद्रो जायते नारायणे प्रलीयन्ते' । 'नारायण. परब्रह्म तत्त्वं नारायणः परः । नारायणः परो ज्योतिरात्मा नारायणः परः ॥ यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' ॥ 'नारायणः परं ब्रह्म' । 'अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति नारायणाद् ब्रह्मा जायते नारायणाद्रुद्रो जायते नारायणादिन्द्रो जायते नारायणाद् द्वादशाऽऽदित्या रुद्रा वसवः सर्वे देवा सर्वे ऋषयः सर्वे लोकाः समुत्पद्यन्ते सर्वाणि च भूतानि नारायणादेव समुत्पद्यन्ते नारायणे प्रलीयन्ते' । इत्यादिभिः श्रुतिभिः परब्रह्मबृहन्नारायणशरीरभूता. सर्वे लोके आविर्भवन्ति, तन्मध्ये तत्तत्समानाकारो भगवानप्याविर्भवतीति प्रतिपाद्यते । एतदुक्तं सुबालोपनिषदि—'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः चक्षुश्च द्रष्टव्यं च नारायणः' । अत्र चक्षुस्तद्दर्शनविषयो मानववेषो भगवानपि दिव्याकृतिः सूचितः । 'किं तदासीन्नैवेह किञ्चनाऽग्र आसीदमूलमनाधारमिमाः प्रजा. प्रजायन्ते दिव्यो देव एको नारायणः' इत्यनया श्रुत्या यस्य मूलान्तरम् आधारान्तरं च नास्ति स्वयं सृष्टिमूलकारणं सृष्ट्याधारं च कारणावस्थमवलम्ब्य प्रजा. कार्यावस्था असृजतेति निवेद्यते ।

अथ परब्रह्मपुरुषोत्तमस्य किशोरस्वरूपानन्दघनमूर्तेः सर्वांगापेक्षया चरणयोः पावित्र्यं चरणसेवकस्य पूतत्वं दुष्कृतनिस्तारं च श्रुत्या निवेदयति—**चरणमिति ।** चरणारविन्दयुगलम्, दिव्यचरणकमलयुगलम्, दिव्यमूर्तिपरमात्मना प्रकटीभूय यत्र क्वापि ब्रह्माण्डे **विततं** विन्यस्तं विस्तारितं विहरणेन स्पर्शितं, तत्र तत्र सर्वत्र **पवित्रं** निर्लेपं निर्गुणं स्पृष्टवस्तुसंगाऽपराभूतं स्पृष्टवस्तुपवित्रकारकं च मायालोकेषु पृथिव्यादिष्वपि अमायिकभावसम्पादकं दिव्यताधायकं सर्वपावनमेवाऽऽधारदोषवर्जितं वर्त्तते । सांगा मूर्तिः शाश्वती सर्वांगानि शाश्वतानि चरणयुगलं शाश्वतं सनातनं पुराणम्, कदाचिदाविर्भूतमिति न, सदैकमानं सदायतनं निर्मितिवर्जितमित्याह—**पुराणमिति ।** अथ भगवानेव पुराणपुरुषः पुरुषोत्तमः सर्वथा पावनः, कथमस्याऽन्यान्यगानि विहाय चरणयोः पुराणयोः पावनत्वमभिहितम् ? इति

चेदित्थम्—मूर्तित्वेन वर्ण्यते तदा मूर्तिः पावनी, मूर्त्यंगत्वेन वर्ण्यते तदा तत्र मूर्त्यंग पावनम्' पावन पूजाऽर्हणम्, हृदयेन पूजार्हा समग्रा मूर्तिः, नेत्रदृष्ट्या पूजार्हे नेत्रे, चन्दनेन पूजार्हं ललाटफलकम्, पुष्पहारेण पूजार्हः कण्ठः, वस्त्रादिना पूजार्हः स्कन्धः, भोजनेन पूजार्हमुदरम्, परिचर्यया पूजार्हौ पादौ, तत्रापि सर्वेषां मूर्तिमता सर्वांगापेक्षया भूम्यादिषु सर्वविधदुःसह-सहनशीलौ कण्टककर्करकर्दमादिषु सव्यापारौ पादौ शरीरसेवकौ निकृष्टमानार्हौ चात्य-त्यवमानार्हौ यावच्छरीरस्तम्भौ सेवकौ प्रियाविति स्वामिनो निकृष्टपूजार्हयोग्यागौ चरणौ पूजितौ सेवकप्रीत्यापादकौ विशेषपूजार्हौ उत्तमाङ्गस्य स्पर्शेन नमनेन प्रसन्नतापात्रताकरौ सेवकस्य मस्तकादप्युत्तमौ स्वामिचरणौ भवतः सेवकस्योत्तमागादप्युत्तमौ प्रत्यक्षप्रमाणाच्चरण-सिद्धौ भवतः, तत्राप्यूर्ध्वरेखाऽष्टकोणस्वस्तिकजाम्बुयववज्राङ्कुशकेतुपद्माना दिव्यपावनचिह्नाना दक्षपादतले सत्त्वेन त्रिकोणकलशधेनुपादधनुर्मीनाऽर्धचन्द्रव्योम्ना दिव्यपावनाकाना वाम-पादतले सत्त्वेन च विशेषतः पावन चरणयुगल सार्वभौमशिष्टाचारस्य बलेनापि पावनतमम्, वामनपादाङ्गुष्ठपावनी गंगा, रामपादाङ्गुष्ठपावन्यहल्या श्रीकृष्णपादाकितपावनरेणुकवृन्दावन श्रीस्वामिनारायणपादाकितपावन छुप्पयपुरम्, स्वय तत्र तत्र सकल्पमात्रेणाऽवतरतोऽपि मम न कोऽपि पारमेश्वरः प्रकारः प्रच्यवति, येन येन प्रकारेण पारमेश्वरस्वरूपेणाऽस्मि तेन तेनाऽनुज्झित एवाऽऽविर्भवामि देवमानवादिसमस्थानवेष प्रदर्शयन्नुपत्तिष्ठामीति। ततस्तत्र तत्र मे चरणौ सर्वेषा शिरोमुकुटमणिस्पृष्टौ सर्वेषा दुष्कृताना विनाशकौ भवतस्ततो **येन** चरणयुगलयोगेन चरणनिहितशिरस्को भक्तः, **पूतः** सन्नेव निजस्य यानि यानि जन्मान्तर-जान्यपि **दुष्कृतानि** भोग्यानि कर्माणि पुण्याऽपुण्यात्मकानि सर्वाण्यपि, **तरति** तरति पाप्मान तरति शोक तरति मोह य एव वेद, नतोऽस्म्यह तच्चरण समीयुषा भवच्छिद स्वस्त्ययन सुमङ्गलम्, तव चरणशतपलाशच्छाया विविधवृजिनससारपरिश्रमोपशमनीमुप-सृतानाम्, यत्पादाब्ज प्राप्य यदृच्छयाऽद्य स्वस्थः शेते मृत्युरस्मादपैति, न केवलो दुःखा-पगमः किन्तु मुक्तस्वरूपः साकारकिशोरः, सन् परमात्मपरमानन्दभोगवान् भवति, प्रथमस्य द्वासप्ततितमे सुधासिन्धोस्तरगे प्रोक्त—यस्य भगवत एकैकरोम्ण्यनन्तकोटिब्रह्माण्डान्यणु-समानि निवसन्ति तादृङ्महत्स्वरूपस्य दर्शन कर्तुमप्यसमर्थाना जीवाना तत्स्वरूपेण कल्याण-योगो न भवेदतो भगवान् जीवाना कल्याणार्थ मानवस्वरूपवेषः समाविर्भवति तदा तस्य सेवार्हतायोगो जीवाना भवति तेन च कल्याण सम्पद्यते जीवानामिति।

अथ **चरणम्**—आचरणम्, 'लोकवत्तु लीलाकैवल्यम्', मानवस्वरूपवेषो भगवान् स एव दिव्यमूर्तिभक्ताभिलषितरमणानुकूलाऽऽदर्शितदिव्यकिशोरानन्दघनवेषो यानि यानि समाचरत्याचरणानि भक्तानुकूलानि तानि पवित्राणि पावनकारकाणि विततानि विस्तृतानि विशालानि सख्यावर्जितानि सर्वबुद्ध्यगम्यानि वरणपात्रगम्यानि पुराणानि सृष्टिसृष्ट्यन्तर-समाचरितानि यानि यानि तानि तानि यथानुकूलानि यथेष्टानि स्मृतानि वर्णितानि गीतानि तैस्तैस्तत्तदर्थभावभावितस्वरूपस्फुरणसबीजैः करणैः पूताः पावना भूत्वा भक्ता निजदुष्कृतानि

## आत्मैवेदमग्र आसीत् पुरुषविध इति ॥ ५ ॥

परित्यज्य प्रक्षाल्य प्रज्वाल्य भोग्यतया निर्बीजीकृत्य तरन्ति शोकान् तरन्ति पाप्मनः प्रभान्ति सम्पन्ने च स्वरूपसत्याकाराः प्रयान्ति ब्रह्मलोकं भुञ्जते परब्रह्माऽऽनन्दान् न पुनरावर्तन्त इति ।

परमात्मा परमपुरुषोऽक्षरधाम्नि दिव्यकिशोरस्वरूपसत्याकाराऽऽनन्दघनमूर्तिर्विराजते इति पुनः कारणबोधकश्रुत्या द्रढयति आत्मैवेदमग्र आसीत्पुरुषविध इति । (बृह० उ० अ० १ ब्रा० ४–१) । अग्रे सृष्टेः प्राक्काले, आत्मा—सूक्ष्मदशापन्नचिदचिद्विशिष्टपरमात्मा शरीरी कारणावस्थो विशिष्टः, एव—अन्याभिमतपरमाणुकालादिस्वतन्त्रकारणतानिवृत्त्यर्थकः, इदम्—एतदिदानीं दृश्यमानं स्थूलावस्थं व्यष्टितयाऽपि समष्टिस्वरूपेण सर्वम्, कारणावस्थपरब्रह्माऽभिन्नं विशिष्टाभिन्नं सूक्ष्मदशापन्नमासीत्, सत्तयाऽऽसीदेव, अग्रे इत्यनेन समयविशिष्टमपि दर्शितम्, इदमित्यनेन कारणेन सह कार्यस्य तादात्म्यं दर्शितम्, आत्मेत्यनेन परमात्मा विशिष्टो दर्शितः, ननु कीदृशोऽयं परमात्मा तदानीमिति चेत्, कार्यकारणात्मकोऽन्वय्यपि स समर्थो व्यतिरेकस्वरूपः सार्वभौमः सम्राट् आनन्दघनसाकारस्वरूपः सुमूर्तः किशोरो घनश्यामो दिव्यमूर्तिः परमात्मा स्वामी बृहन्नाराणोऽयं **पुरुषविधः**—पुरुषस्वरूपो दिव्यकिशोर आसीत् । तत्र दिव्यकिशोरोऽनादिनित्यसिद्धदिव्याकृतिरासीदिति स एवाऽयं धर्मजः परमात्मा श्रीहरिर्मानवमूर्तिरिति । एतदर्थपोषिका अन्याः श्रुतयः—सेयं देवतैक्षत, तदैक्षत बहु स्यां प्रजायेय, स ऐक्षत लोकान्नु सृजै, सोऽकामयत बहु स्यां प्रजायेय, स तपोऽतप्यत, स तपस्तप्त्वा इदं सर्वमसृजत, सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि, तस्यैष आत्मा विवृणुते तनुं स्वामिति । अथ भगवतो दिव्यमूर्तिमत्त्वं दिव्यसद्गुणित्वम्, प्रतिपादयन्ति श्रुतयः—"योऽयमात्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः, पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, रसो वै सः, रसं ह्येवाऽयं लब्ध्वाऽऽनन्दीभवति, एष ह्येवाऽऽनन्दयति, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता, यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्, य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः, तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी, वेदाऽहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्, तस्य ह वा एतस्य पुरुषस्य रूपं यथा महारजनं वासः, मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः, रुक्माभम्, तस्मिन्नयं पुरुषो मनोमयोऽमृतो हिरण्मयः" स्मृतयः—'समस्तकल्याणगुणात्मकोऽसौ सर्वज्ञता तृप्तिरनादिबोधः । स्वतन्त्रता नित्यमलुप्तदृष्टिः अनन्तशक्तिश्च विभोर्विभुज्ञाः ॥ मा भजन्ति गुणाः सर्वे, निर्दोषपूर्णगुणविग्रह आत्मतन्त्रः, आनन्दमात्रकरपादमुखोदरादिः, भगवान् दिव्यविग्रहः' इति ।

# यः सर्वज्ञः सर्ववित् यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष व्योम्नि आत्मा प्रतिष्ठितः इति

अथाऽऽकाशशरीर ब्रह्मेत्यत्रापि समन्तात्काशते इति प्रकाशमानदिव्यविग्रहः परमात्मा वर्ण्यते,

अथ ( मुण्ड० उ० मु० २ ख० २–७ ) 'यः सर्वज्ञः सर्ववित् यस्यैष महिमा भुवि' इति श्रुत्या सामान्यविशेषोभयज्ञानात्मकप्रत्यक्षदर्शनवत्त्व सुमूर्तिमत्त्व द्रष्टृदिव्यपुरुषत्व प्रतिपाद्यते, यस्य परमपुरुषस्य दिव्यकिशोरानन्दघनस्वरूपसन्मूर्तेरत्र भुवि भवनशीले तच्छरीरभूते लोके महिमा, परमपुरुषस्य सर्वजडचेतनविशिष्टत्वव्यापकत्वान्तर्यामित्व-नियामकत्वसर्वात्मकत्वादिमहिमा रूप रूप प्रतिरूपभवनमहिमा च वर्ण्यते श्रुत्या, अत्रार्थे मुण्ड उ० मु १ ख० १–९ श्रुत्योपबृह्यते—'य सर्वज्ञः सर्ववित् यस्य ज्ञानमय तपः, तस्मादेतद् ब्रह्म नामरूपमन्न च जायते' इत्येव परस्य ब्रह्मणो जगत्कारणत्वमहिमाऽपि च वर्ण्यते । य.—सुमूर्त. परमपुरुषोत्तमः स्वरूपसन्मूर्तिमान् आनन्दघन. श्रीहरिर्व्यतिरेकस्वरूपोऽपि विशिष्टकारणात्मकः सगुणो भगवान् ज्ञानगुणो मुख्यः सार्वज्ञ्यार्थयुक्तस्तदनु चाऽन्ये गुणा महिमशब्देनोच्यन्ते, तथा च स श्रीहरिः किशोरदिव्यमूर्तिः सर्वज्ञ. सर्वविषयकविशेषज्ञानवान् स एव भगवान् सर्ववित्—सर्वविषयकसामान्यज्ञानवान्, न हि भगवन्तमन्तरा कोऽपि सर्व-तत्त्वविशेषसामान्यज्ञानवान्, आनन्दघनमूर्तावानन्दगुणो मुख्यतमस्तत्र सच्चिदानन्दे चैतन्यस्य सार्वज्ञ्यस्य नित्यगुणत्वात् श्रुत्या स निवेदित., सन्मात्रस्य चैतन्याऽऽनन्दवत्त्व मुख्य तदन्येषा तत्र तत्र तत्तदभिमतार्थे मुख्यतमत्वमिति ।

अथ भुवीति कथमुक्तम् ?, सर्वत्र व्याप्त्यर्थमुक्तम्, 'कृषिर्भूवाचकः शब्द' इति निघण्टुः, कृष् आकर्षणे, भगवान्निज प्रत्याकर्षयति भक्त सर्वत्र भगवदाकृष्टे शरीरात्मके जडचेतने विशेषणाना भूस्वरूपे भगवत्साक्षाद्विशेषणरूपे मायातत्त्वे जीवेश्वरमुक्तब्रह्मतत्त्वादौ च सर्वज्ञातृत्ववान् सर्वत्र वृत्तिमान् सर्वत्राऽनन्तशक्तिसम्पादकः परमात्मा सर्वान्तर्यामी यथेष्टावतरणवाँश्चेति सर्वसमुदितार्थ बोधयितु **महिमा भुवीति** प्रोक्त पदद्वयम् । अथाऽणुत्व कथ नोक्तम्, महता द्रव्याणाम् असग्रहपरिहारायाऽणुत्व नोक्तम्, तदुक्तौ तद्ग्रहण न स्यात्, अणुत्वे महत्त्वाऽसमावेशात्, महत्त्वे त्वणुत्वस्य व्याप्यतया समावेशात्, महदाकाशे घटाकाशवत् पृथिव्या ककरवत् चिदाकाशे भूताकाशवत् परब्रह्मणि ब्रह्मवत् शरीरिणि शरीरवत्, तथा च महिमवतोऽणुत्ववत्त्वस्य वास्तविकतया ग्रहणात्, अणोरणीयान् महतो महीयानिति श्रुतिरपि सम्मताऽस्ति, यस्य सर्वदेशवृत्तित्व तस्याऽऽन्तरदेशवृत्तित्व सुतरामिति मानवदिव्यकिशोरानन्दघनवेषत्व निष्प्रतर्क्य सिद्धयत्येवेति ।

अस्यैव भगवतोऽक्षरे धाम्नि दिव्यस्वरूपसत्साकारानन्दघनमूर्तित्व श्रुत्या पुनः प्रतिपाद्यते—**'दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः'** इति । दिव्य द्योतमान

यद् ब्रह्मपुरम् अक्षरधाम परम व्योम चिदाकाशाभिधान तस्मिन्, सर्वेषा भूताना सर्वेषा लोकानामधिपतिरन्तरात्मा सर्वेषा परम आत्मा परमात्मा परमेश्वरः परमपुरुषः पुरुषोत्तमो व्यतिरेकस्वरूपो नियामकः श्रीहरिरेषः प्रत्यक्षप्रमाविषयो धर्मभक्तिपुत्रोऽय साकारो दिव्यमानवस्वरूपसदानन्दघनाकारोऽत्र सर्वसेवास्वीकर्ता सेवकसमप्रकटितस्वरूपस्वभावगुणादिर्वर्तत इति। 'यो यस्याऽध्यक्ष. परमे व्योमन्' इति श्रुत्या परमव्योम्नोऽध्यक्षतया परमपुरुषो वर्णितः, योऽध्यक्षः सः साकारमूर्तिः सर्वद्रष्टा सर्वांगिपरमपुरुष इति। 'यत्र पूर्वे साध्याः सन्ति देवा.' इति श्रुत्या तत्र धाम्नि साध्यभगवत्समाना दिव्या द्योतमाना देवा मुक्ताः सुमूर्ता भगवत्सेवाया भगवत्समानवेषा वर्तन्ते इति निरूप्यते 'यत्र गावो भूरिशृङ्गा अयासः अत्राह तदुरुगायस्य वृष्ण.' कृपावर्षिणोऽनन्तकीर्तिमतः सुमूर्तपरमपुरुषस्य श्रीहरेः अनन्ता. असख्यस्वरूपान्त.शाखस्वरूपाः गावः किरणानि वर्तन्ते। 'निर्दोषपूर्णगुणनिर्गुण आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीन.'। एतत्स्मृत्या सर्वदिव्यगुणसहिते भगवति जडा गुणा न सन्ति, किन्तु चेतनाः सर्वे गुणा मुक्ता ब्रह्ममूर्तयः सन्ति, लोके तु शरीरे गुणा जडा विद्यन्ते मायाशरीरे गुणा अपि जडा विद्यन्ते संयोगादयः, परमात्मनि स्वरूपमूर्तौ सर्वे गुणाश्चेतनतत्त्वात्मका इति प्रतिपाद्यते। अथ नारदपञ्चरात्रे प्रोक्त परमात्मनः सर्वाण्यायुधानि शखचक्रगदापद्मादीनि मुक्ताश्चेतना मूर्तिमन्तः सेवाया वर्तन्ते यथावकाश भगवत्सेवाया भगवत्सारूप्यवेषा अपि वर्तन्ते, ब्रह्मवैवर्तपुराणे श्रीकृष्णजन्मखण्डेऽप्युक्त शक्तयः सर्वाः श्रीकृष्णपरमात्मनो मूर्तेः प्रकटीभूताश्चेतना मुक्तान्यो दिव्यकिशोर्यो दासीस्वरूपाश्चैतन्यवन्तो ज्ञानिन आत्मानः सर्वा न त्वचेतनाः, ता गगासरस्वतीशिवालक्ष्मीराधारमाप्रभाविरजापार्वतीदुर्गासुशीलापद्मासावित्रीकमलाद्या भगवत्पत्न्यो वर्तन्ते इति। तत्रैवोक्त श्रीकृष्णभगवतो वशी भगवदधरामृताधिकारिणी चेतनाऽऽत्मतत्त्वात्मिका राधिका भगवदगनावेषा प्रवर्तते इति। कामश्च भगवन्मूर्तेः कामनात्मकः स्वय चेतन आत्मा मुक्तस्वरूपो गुणो मूर्तिमान् रतिपतिर्देवशरीर उद्भूतो दिव्यश्चेतन इति इत्येव नारायणस्य सुदर्शनचक्र सहस्रार्जुनो राजा चेतन आत्मा प्रकटीबभूव,तथा शकरजटाशो वीरभद्रश्चेतन उत्पन्न' ब्रह्मणो हृदयसकल्पात्मको धर्म उद्भूतश्चेतनो मूर्तिमान्, धर्मशरीरात् ज्ञानवैराग्यौ चेतनौ साकारौ पुरुषावुद्भूतौ, अन्या अपि प्रजा उद्भूताः, एतत्सर्व तत्तच्चेतनवृन्दमेव सुवेषदिव्यस्वरूपमभवदिति चेतना एवाऽवतारास्ते ते लिखितास्तत्र तत्रेति। अथ पुराणेष्वन्यत्र च, स्कन्दपुराणे रेवाखण्डे—नरो नारायणश्चापि हरिः कृष्णस्तथैव च। विष्णोरंशाऽशका ह्येते चत्वारो धर्मसूनवः॥ तत्र नारायणनरौ गन्धमादनपर्वते। आत्मन्यात्मानमाधाय तेपतु' परम तपः॥ (५।१९२।११।)। 'अरण्ये वह्निः सीता गृहीत्वा छायासीता ददौ' तत्र छायाऽपि चेतना युवती दृष्टा। 'सीताछाया द्रौपदी' (ब्रह्मवै० पु० प्र० ख० २।१४-२१ त' ५९ पर्यन्तम्) 'ब्रह्मणो मनस. कामोत्पत्तिः स कामपुरुषश्चेतन.' (शि० पु० सतीखण्डे। २।३।)। 'भक्तिः स्वय स्नेहसेवागुणात्मिका चेतना भगवन्माता प्रसिद्धा, वाणी सरस्वती शारदा वाचो मूर्तिमत्यश्चेतना देव्यः प्रसिद्धाः।'

'क्रोधाद् रुद्रोऽजायत' ( भा० पु० ३।१३। ) 'ब्रह्मणो नसो वाराहावतारो जातः'। त्रिपाद्विभूतिमहानारायणोपनिषदि शखचक्रगदापद्मादयो मूर्तिमन्तश्चेतनाः पार्षदा आयुधमूर्तय उक्ताः, 'अरे वाऽस्य महतो भूतस्य निःश्वसितम् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाऽङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि सर्वाण्यस्य निःश्वसितानि' इत्यत्र बृहदारण्यके परमेश्वरश्वासशक्तेश्चेतनाया अवताराश्चेतना वेदादयः प्रोक्ताः, ( सत्सङ्गिजीवने ४ प्र० २७ अ० ४८ प्रोक्त 'श्रीवृन्दावनविहार्याख्यराधाकृष्णाऽर्चा-समीपे स्वार्चास्थापने श्रीहरेरयमभिप्रायः प्रतिभाति—अक्षरधामाधिपतिरनन्ताऽक्षरमुक्तो-पासितचरणपकजो राधारमादिकाऽनन्तशक्तिसमर्चितपादपद्मः श्रीदामादिपार्षदैर्यथाकाल छत्रचामरादिमहाराजोपकरणैः कृतपरिचर्यः सकलावतारैकनिदानरूप सदा दिव्यकिशोरावस्थो रूपानुरूपावयवः कालमायामहापुरुषाद्यनन्तशक्तिप्रेरकः सर्वान्तरात्मा पुरुषोत्तमोऽहम्, तस्य मम क्रोडाद्यनेकावतारेभ्यो वृन्दावनविहारिणि श्रीकृष्णे सकलावतारेभ्योऽप्यतिशयिता प्रीतिरस्ति तस्यामपि च गाढानुरागोऽस्ति इति स्वीयान् ज्ञापयितु तदर्चान्तिके स्वार्चास्थापन कृतमिति, अत्रापि शक्तिपार्षदोपकरणाद्याश्चेतनाः सेवकाः सुमूर्ताः परिचर्यापरायणा अभिहिताः। महाभारते आदिपर्वणि ( अ० १९७, श्लोकः ३२ ) 'स चापि केशौ हरिरुद्बबर्ह शुक्लमेकमपरं चापि कृष्णम्'' । इत्यनेन केशौ चेतनौ धृतावतारवेषौ साकारदिव्यमानवाकारावुक्तौ'' भागवते 'सितकृष्णकेशः' । जातः, ( भा० २।७।२६ ) इत्युक्तम् । बृहन्नारदीयपुराणे उत्तर-खण्डेऽध्याये ५८—'तत्तेजः सर्वदा देवि निर्गुण गुणकृन्मतम्' गुणास्तदशवो भद्रे सर्वेव्याकृत-रूपिणः इत्यनेन हरेस्तेजसोऽपि चेतनत्व तदशाना स्वरूपवत्त्व चेतनात्मस्वरूपत्वमुक्तम् । ब्रह्माण्ड-पुराणेऽध्याये ३७ उपोद्घाते पादे ३—'मम चक्रस्याऽवतारः कार्तवीर्यो धरातले' । इत्यनेन सुदर्शनचक्रस्य राजस्वरूपेण सहस्रार्जुनात्मकत्वेन चेतनात्मत्व प्रोक्तम् । ब्रह्मवैवर्तपुराणे ख० ४ अ० ७—'तस्या एवाऽष्टमो गर्भो वायुपूर्णो बभूव ह । निस्ससार च वायुः स देवकीजठरात्ततः' । ३७।७४। इत्यनेन वायोर्बालचेतनसुमूर्तता प्रोक्ता । ब्रह्मवै-प्र० ख० २ अ० १—'मूर्तिश्च धर्मपत्नी सा कान्तिरूपा मनोहरा' इत्यनेन मूर्त्याः कान्तिरूपायाश्चेतनात्मत्व दर्शितम् । वाराहपुराणे अ० ३२ 'तस्य चिन्तयतस्त्वगात् दक्षिणाच्छ्वेतकुण्डलः । प्रादुर्बभूव पुरुषः श्वेतमाल्यानु-लेपनः ॥ ३ ॥' इत्यनेन 'चिन्तनात्मा चेतनो धर्म उक्तः' । कूर्मपुराणे अ० १२ हिमालये-नाऽनन्ताः शक्तयः—'ज्ञानशक्तिः क्रियाशक्तिः प्राणशक्तिरिति त्रयम्' इत्येवमनन्ताः शक्तयश्चेत-नात्मस्वरूपिण्य उक्ताः । कूर्मपुराणेऽध्याये २—'तदा श्रीरभवद्देवी कमलायतलोचना । नारायणी महामाया मूलप्रकृतिरव्यया' इत्यनेन मूलप्रकृतिर्जडा श्रीर्नारायणी सलोचना सुमूर्ता चेतनात्मा प्रोक्ता' । वायुपुराणेऽध्याये ७०, 'दत्तात्रेय तनुर्विष्णोः पुराणज्ञाः प्रचक्षते' इत्यनेन दत्तात्रेय चेतनात्मान विष्णुतनुरूपमपि पुरुषरूप चेतनतत्वमुक्तम् । ऋग्वेदे १।१५४।१ 'विष्णोर्नु क वीर्याणि प्रवोच यः पार्थिवानि विममे रजासि' इत्यनेन विष्णोः पराक्रमाः वीर्याणि च शरीराणि चेतनाऽवताराणि आत्मस्वरूपाण्युक्तानि' । 'केरलराजपुत्रः कुलशेखर-

# अथ नित्यो नित्यानां चेतनश्चेतनानामेको

नामा कौस्तुभमण्यवतार· प्रोक्तः चेतनो मणिरुक्तः'। 'विप्रनारायणो ब्राह्मणो वनमालाऽवतार उक्त आत्मा चेतनो वनमाला'। 'मुनिवाहन· श्रीवत्साऽवतारोऽभवत् चेतनात्मा श्रीवत्स उक्त.'। 'पोयगे' स्वय पाञ्चजन्याऽवतारोऽभवत् चेतनात्मा शख.'। 'भूतत्ता' स्वय गदाया अवतारस्वरूपताऽभवत्'। 'पेयालवारः' स्वय खड्गस्याऽवतारोऽभवत् खड्ग-श्चेतनात्मा प्रोक्त.'। 'निम्बार्काचार्यः सूर्यावतारोऽथवा सुदर्शनचक्रावतारोऽभवदिति चेतनात्मा प्रोक्तः सुदर्शनहेतिः। 'मध्वाचार्यो वाय्ववतारोऽभवत् वायुश्चेतन उक्तः। 'वल्लभाचार्यः' स्वय सोमयज्ञस्य फल पुण्यमवतरितम्, पुण्य फल चेतनात्म प्रोक्तम्। 'चैतन्यमहाप्रभुः राधावतारोऽभवत्'। 'श्रीहिताचार्यो भगवतो वश्या अवतारोऽभवत् वशी आत्मा चेतन उक्तः 'महेश्वरतन्त्रे' दिव्यब्रह्मपुरस्येह ब्रह्माऽद्वैतस्य वासनाः। तासामेका च परमा सुभगा सुन्दरी प्रिया'सा चन्द्रनाम्नी चन्द्रनामा पुमान् आत्मा चेतनोऽभवत् इत्युक्तम्। 'ब्रह्मा-स्त्रादीन्यस्त्राणि समन्त्राणि सचेतनात्मस्वरूपाणि'। 'महाकालो भगवत्सकल्पात्मकश्चेतनात्मा मूर्तिमान्' भगवतेज· श्रीकृष्णस्वरूपम्'। 'भगवद्वीर्य नारायणस्वरूपम्'। 'भगवद्बल बल-देवस्वरूपम्'। 'भगवदैश्वर्यम् अपरवासुदेवस्वरूपम्'। 'भगवद्ब्रह्मचर्य नारायणनरस्वरूपम्'। 'भगवज्ज्ञान सनककपिलादिस्वरूपम्'। 'भगवच्छक्तयो लक्ष्मीराधादिस्वरूपाः'। 'विष्णुपुराणे 'उज्जहाराऽऽत्मनः केशौ सितकृष्णौ महामुने। उवाच स सुरानेतौ मत्केशौ वसुधातल। अवतीर्य भुवो भारक्लेशहानिं करिष्यत.'। (वि० पु० ५।१।५९–६०)। परमेश्वरकेशा अपि चेतनात्मानो बोध्याः, चिह्नानि चेतनात्मानः, आभूषणानि चेतनात्मानः वेषालकाराम्बराणि चेतनात्मानः, आश्रयणानि चेतनात्मानः, आयुधानि यष्टिमालाकण्ठीनक्तकादयोऽपि चेतना-त्मान·, उष्णिकूपत्त्राणपादुकापादपीठच्छत्राद्युपकरणानि सर्वे मुक्ताश्चेतनाः, पुष्पहारा मणयो यज्ञोपवीत चन्दनद्रवाद्या· सुगन्धसाराः स्वेदाः शब्दस्पर्शरूपरससौरभादयः कलशपात्रादयः सिहासनोपकरणादयो वृक्षवल्लीस्तम्बसस्योद्यानालयमहोलादयः सर्वेऽपि चेतनात्मानो मुक्ता-त्मानो धामनि वर्तन्ते। अथास्य श्रीहरेः गुणाष्टक षडैश्वर्याणि एकोनचत्वारिंशद्गुणाः अन्येऽपि असख्या गुणाश्चेष्टाः कर्माणि धर्मास्तेजासि विरामस्तृप्तयो मोदा आनन्दाः सुखानि प्रवृत्तयोऽभिलापाभावनास्नेहप्रीतिभक्तिसेवादय· सर्वे चेतना मूर्त्यभिन्ना ये ते प्राविर्भवन्त्यव-तारास्तत्राऽऽत्मद्वयम् एकः अवतारचेतनस्तत्रान्तरात्मा परब्रह्मेति स्वयमवतारी एव विशिष्टै-कात्माऽविशेषणोऽन्यस्य, सर्वथा विशेषणत्वाऽनास्कन्दितत्वम् अवतारित्वम्, तदन्यत्वम् अवतारत्वम्। श्रीहरेर्मूर्तिगुणादयोऽवताराः। अक्षरब्रह्मणोऽप्यवताराः, मुक्तानामप्यवताराः ईश्वराणामप्यवताराः देवर्षिपितृविष्णुविराट्पुरुषादीनामप्यवतारा भवन्तीति सूक्ष्मं यथायथ विद्वद्भिर्योजनीय ब्रह्मरसायनपात्रमेतत्सत्सगरसायनपात्रमिति।

अथ कठवल्ल्याम् (अ० २ वल्ली–५–१३) चेतनाना बहुत्व परमेश्वरस्यैकत्व चेतनाना नियाम्यत्व परमेश्वरस्य नियन्तृत्व सर्वकर्मफलप्रदत्व भगवत आत्मना च मिथः

## बहूनां यो विदधाति कामान् ॥

स्वाभाविकभेद सर्वकामपूरकत्व च नित्यो नित्यानामित्येतच्छ्रुत्या प्रतिपाद्यते, तत्र चेत् न' इत्यनेन सर्वज्ञस्वरूपसत्सुमूर्तानन्दघनदिव्यसाकारसगुणसर्वज्ञातृत्व 'नि'इत्यनेन सदातनशाश्वतत्वम् 'एक'इत्यनेन सर्वचेतनेष्टत्वमपरमनियामकविशिष्टसर्वावतारिपरमेश्वरत्व विशिष्टावतारिसर्वेश्वरनिजसमानेतररहितस्वामित्वं च सर्वकामान् 'विदधाती'त्यनेन कामसङ्कल्पवता दिव्यमुक्ताना स्वरूपसता सुमूर्ताना साकारस्वरूपाणा सेवाऽङ्गीकरणयोग्यः अनादिनित्यसिद्धदिव्याकृतिस्वरूपसदानन्दघनसाकारकिशोरसुस्वरूपो भगवान् सर्वकामपूरो भक्तेच्छानुसम्पादकदिव्यनवनवसुवेष परमात्मा श्रीहरिः सर्वावतारी ब्रह्मस्वामी मुक्तपतिर्मायाधीश ईश्वरेश्वरस्तत्त्वान्तरात्मा परमेश्वरः परब्रह्म सर्वकामनाव्याप्तसमस्तमनोरथपूरणानुकूलदिव्यसमस्वरूपानुस्वरूपद्योतमानसमुज्ज्वलसर्वोज्ज्वलपरमपुरुषः श्रीस्वामिनारायणो विशिष्टशरीरी व्यतिरेकस्वरूपोऽन्तर्यामी बहिरन्तःस्वरूपो यथा यथा कामितस्तथा तथा सुवेषः श्रीहरिकृष्णो महाराजो वर्ण्यते । अयमर्थः 'कामानि'ति बहुवचनप्रयोगेण लभ्यते 'विदधाती'त्यनेन सर्वेच्छापूरकत्वं मुक्तादीना सर्वेष्टपूरकत्वमीश्वरादीना सर्वकर्मफलप्रदत्व जीवात्मना सर्वाऽऽपूरकत्व च मायादीना च परब्रह्मणि सहजानन्दे बृहन्नारायणे निवेद्यते । उक्त च स्कान्दे वासुदेवमाहात्म्ये "नित्याना-मात्मना नित्य आत्मा चेतनचेतनः । क्षराऽक्षरेभ्यश्च परस्त्व परम हरे" । (स्क. पु० वा० मा० अ० १७।२९)॥ (श्वेता० अ० ६।१३) इत्यत्रापि श्रुत्या 'नित्यो नित्यानामि'त्यनया 'नित्यसिद्धे तदाकारे' एतत्सर्व समन्वित च वर्ण्यते ।

अथ परमेश्वरः कथ कर्मफल दद्यात्, दानस्य यथेष्टविनियोगार्हस्य स्वायत्तवस्तुकर्मकत्वात्, फले कर्मजन्ये कर्मकर्तृव्यक्त्यधीने परमेश्वरस्य स्वत्वाभावादिति चेन्न । निरीक्षणात्मकस्य श्रुत्यन्तरेण प्रतिपादितत्वात्, 'एष यं साधु कर्म कारयति तमुन्निनीषति, एष यमसाधु कर्म कारयति तमधो निनीषति,'—इति श्रुत्या यं साधुकर्मस्थ निरीक्षति तम् ऊर्ध्वलोक प्रति निनीषावान् भवति यम् असाधुकर्मस्थ निरीक्षति तम् अधोलोक प्रति निनीषावान् भवति । अथ कथ परमेश्वरस्य निनीषा, कर्मणाऽऽत्मा स्वय नीयमानो भविष्यतीति चेन्न । कर्म जडम्, कर्मणि कर्माऽभावात्, निष्कर्मणो नीयमानत्वाऽसभवात्, अथ परमात्माऽपि निष्कर्मा, इति चेन्न, चेतनस्येच्छावत्त्वेन ज्ञातुः प्रवृत्तिमतस्तस्य प्रवर्तकत्वेन निरीक्षितस्य जडस्य सुखाद्यात्मकफलयोजकस्य निरीक्षकत्वेन तत्प्रापकतया निरवद्यत्वात् । आत्मना कर्मकर्तृत्वम्, तच्च परमात्मायत्तम् 'परात्तु तच्छ्रुते' रिति सूत्रेणोक्तम् । श्रुतिश्च 'अन्तः प्रविष्टः शास्ता जनाना सर्वात्मा' । 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीर य आत्मानमन्तरो यमयति' इति । अत्र परमात्मायत्ताऽऽत्मनिष्ठकर्तृत्वेऽपि न विधिनिषेधवैयर्थ्यम्, पूर्वपूर्ववासनानुगुण्येन प्रवृत्तस्याऽऽत्मनः प्रवर्तकत्वं परमात्मनीति । 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य' इति सूत्रेणैतदुक्तत्वात् । यावज्जीवात्मनां चिच्छक्ति-

**तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषामिति ॥ ६ ॥**

प्रवृत्तिशक्तयो. करणकलेवरादिलाभस्य च परमात्मायत्तत्वात् प्रवृत्तिमात्रे परमात्मनो हेतुत्वात्। अदृष्टादिवत् कालवच्च कर्तृत्वे साधारणकारणत्वेऽपि 'अन्त.प्रविष्टः शास्ता जनाना सर्वात्मा' 'अध्यक्षश्चानुमन्ता च'। 'एष एव साधु कर्म कारयति' इत्यादिस्वारस्यादसाधारणकारणत्वमपि परमात्मनि निवेद्यते। तत्र प्रथमप्रवृत्तौ जीवो गुणत्रयतारतम्यवासनाविशेषोद्बोधादिभिरसाधारणकारणैः क्वचिदिच्छति यतते च, तस्या प्राथमिकप्रवृत्तौ वाञ्छायां च भगवानुदास्ते तथापि साधारणकारणत्वमनपायम्, आदौ स्वतःप्रवृत्तिमपेक्ष्याऽनुमन्यते परमात्मा, ततो जीवस्य द्वितीयादिप्रवृत्ति., तत्रानुमतिदान प्रथमप्रवृत्तिफलदानरूपम्, उन्निनीषाऽधोनिनीषा वा तु अत्यन्तानुकूलेऽत्यन्तप्रतिकूले च। तत्प्रवृत्तौ परमेशस्य सकल्पविशेषपूर्वक प्रयोजकत्वम्, परमेशस्य क्वचित्सत्तामात्रेण क्वचिदनुमतिदानेन क्वचित्प्रयोजकतया च प्रवर्तकत्वमिति। अथाऽत्र सर्वत्र साक्षितया स्थितः परमात्मा'ऽत्मना कर्त्रा सह निरीक्षतेऽनुमीयते प्रयोजयत्यपि च. आत्मनश्चेतनस्य प्रथमप्रवृत्तौ वासनया जायमानाया प्रत्यवायाऽन्ववायानुरूपार्थकस्याऽवर्जनात्। न हि क्रयविक्रये जडपदार्था द्रव्यफलदायकाः, मूल्यकर्तार चेतन विना निष्फलत्वात्, चेतने एव फलदातृत्वम्, कर्ता द्रव्यफल सुखादि भुक्ते, द्रव्यदाता त्वन्यः, एव मूल्यकारो दाता, मूल्य च मतिमूलम्, यथावन्मतिः परमेशस्य, स मूल्यदाता, एतदेव फलदातृत्वम्, आत्मकृतकर्मसु अन्वितपरमात्माऽधिष्ठितेनाऽऽत्मना कृतत्वात्। निरीक्षणसत्तायाः परमात्मनः सत्त्वात् स्वत्वेऽविरोधात्, आत्मना कृतकर्मणा प्रकृतिस्वभावसस्कारप्रारब्धाऽदृष्टवासनादिस्वरूपाणा विशिष्टे सत्त्वात् विशिष्टे सत्तायाः सत्त्वात् विशेषणे मुख्यकर्तृत्वेन मुख्यफलवत्तायाः विशिष्टे निरीक्षकतामात्रत्वेन भोग्यत्वेनाऽफलवत्ताया निराबाधात्। 'चिरध्वस्त फलयाऽल न कर्माऽतिशय विना' अतिशयश्चात्मसु चैतन्यविशेषः, तस्य सर्वज्ञचेतनाधीनफलवत्ताया यथायथ व्यवस्थानात् विस्मर्तृव्यक्त्यधीनफलवत्ताया विस्मरणाधीनाऽव्यवस्थानात्", नियतव्यवस्थार्थकश्रुत्यधीननिर्णयात्। कर्मफलमात्मनियतभोगात्मकम्, न जडनियतभोगात्मकम्, वातोदकप्रेरिततृणस्योड्डयने न तृणस्य फलभोगः, साक्षात्परम्परया वा चेतनानामेव तत्फलवत्त्वात्, चेतनफलव्याप्तौ चेतनतत्साक्ष्युभयव्याप्तेर्ध्रौव्यात्। अर्थात् साक्षित्वे परमेशस्यात्मनः फललब्धिवत्त्वमिति सुस्थिरम्। सवासनस्य फलवत्त्वात्, निर्वासनस्य तु फलाऽप्रसक्तेर्मोक्षवत्त्वात्। तथा च सिद्ध कर्मफलप्रयोजकत्वादिकं परमात्मनीति।

अथ दिव्यकिशोरानन्दघनस्वरूपसत्साकारमूर्तिभगवतोऽन्तर्यामितयाऽपि दिव्याणुसाकारमूर्तिदर्शनविधि श्रुतिराह—'तमात्मस्थ येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषामि'ति।६। **तं** सदाऽक्षरधामस्थसच्चिदानन्दघनस्वरूपसत्साकारकिशोरमूर्तिश्रीस्वामिनारायणपरमात्मान व्यतिरेकिण तमेवाऽन्वयिन सर्वान्तर्यामिण **निजात्मस्थं** सूक्ष्मातिसूक्ष्ममूर्तिम् अणोरणीयास सुरूप रमणीयद्योतमानमूर्तिम्, **ये धीराः** धियम् ईम् रान्तीति धीराः, धीराः

ब्रह्मशारदाभगवल्लक्ष्मीवन्तो भक्तजना आत्मसंयमिनोऽन्तश्चक्षुषो युक्तयोगिनो निर्विकल्पस्थितिमन्तः। **अनुपश्यन्ति**—भगवत्साधुजनोपदिष्टदर्शनमार्गमनुस्मृत्यानुस्मृत्याऽन्वनु प्रपश्यन्ति साक्षात्कारयत्न कुर्वन्ति वृत्तिमूर्ति स्फुर्तिमूर्ति चैतन्यमूर्ति निजानन्दमूर्ति साक्षिमूर्ति तमेवाऽन्तर्यामिमूर्ति निजविशिष्ट शाश्वत श्रीहरि स्वविशिष्ट श्रीहरिं श्रीहरिविशिष्ट स्व चाऽपृथक्सिद्धतादात्म्यापन्नमीक्षते **तेषाम्**—साक्षात्कर्तॄणा धीराणाम्, **शान्तिः**—मोदप्रमोदसुखशमोपरतितृप्तिविरामाऽऽस्वादाऽऽनन्दसागरिकाः निजात्मसु प्रोच्छलन्ति, सापि शान्तिर्न क्षणिका न यौगिकी न काल्पिकी किन्तु **शाश्वती** सदातना श्वसाऽप्रतियोगिनी अनिवर्तिनी यावज्जीवनो भगवाँस्तावज्जीवनो यावज्जीवनो निजात्मा तावज्जीवनी शान्ति· आद्यन्तरहिता परब्रह्मस्वरूपानन्दवत् सापि निरवधिका निरतिशयस्य शमस्य अन्तिः महाकोशः परार्धाऽधिकशान्तिः ससीम्न्यपि चेतनेऽसीमशान्तिरिति। तथाविधदर्शनवद्धीरितरेषा तु भगवद्योगहीनाना निजात्मदर्शित्वाऽगन्धाना तु सा शाश्वती शान्तिर्न, अशाश्वती तु सा भगवत्यशाश्वतसाधनैः, मूर्तिदर्शने तत् साधन यद्यत् तदशाश्वतसाधनम्' अपुनरावृत्तिदर्शन ध्रुवसाध्य समनुवर्तते इति।

अथ ब्रह्मवैवर्तपुराणे प्रकृतिखण्डेऽनादिश्रीकृष्णनारायण परब्रह्म पुरुषोत्तमम् अवतारिणम्, गर्गसंहितायाः सप्तमे विश्वजित्खण्डे प्रोक्ता· ये 'हरिणद्वीपेऽपान्तरतमास्तपति, तत्र गरुडो जगाम, गरुडस्य पिच्छमेक पपात, अपान्तरतमाः प्राह—गरुड! मम मस्तके पिच्छसहस्राणि विलोकय, यदा यदा कृष्णावतारो भवति तदा तदा गरुडस्यैक पिच्छ पतति तन्मया धार्यते गण्यते च, सर्वपिच्छाना मम धारणे आनन्त्योत्तर मम मृत्युरिति (७।४०।४२)।।" इति प्रकरणोक्ताः अनन्ताः कृष्णावताराः तेषा सर्वेषामवतारी परब्रह्माऽनादिश्रीकृष्णनारायणपरमात्मा, एन श्रीहरिकृष्णपरमात्मान सुमूर्त साकारं वर्णयितु श्रीगोपालानन्दस्वामी अवतारस्वरूप श्रीकृष्ण साकारमावेदयति प्रमाणवाक्येन **ददर्श कृष्णमिति**। एवम् 'स्कन्दपुराणे काशीखण्डे ४-उ। स० अ० ६१।५ २६२ विष्णुधर्मोत्तरेऽपि च अनादिश्रीकृष्णनारायण परब्रह्मपुरुषोत्तममवतारिण वर्णयितुमुक्ता ये—'नारायणाः शतम्, पञ्चशत च जलशायिनः। त्रिशत्कमठरूपाणि मत्स्यरूपाणि विंशतिः।। ७।। गोपालाश्च शतं साऽष्ट बुद्धाः सन्ति सहस्रशः। त्रिशत्परशुरामाश्च रामा एकोत्तर शतम्।। ८।। विष्णुरूपोऽस्म्यहमेको मुक्तमण्डलमध्यगः।।' इति प्रकरणोक्ता अनन्ता अवताराः अष्टोत्तरशतं प्रोक्ता गोपालाः श्रीकृष्णावतारा·, तेषा सर्वेपामवतारी परब्रह्माऽनादिश्रीकृष्णनारायणपरमात्मा, एन श्रीहरिकृष्णपरमात्मान सुमूर्त साकार वर्णयितु श्रीगोपालानन्दस्वामी अवतारस्वरूप गोपाल मुरलीधर श्रीकृष्ण साकारमावेदयति प्रमाणवाक्येन-**ददर्श कृष्णमिति** भाव सुधासिन्धोः १२२ तरगे श्लोक· १४–२३ पर्यन्ते च 'सदा मगलरूपोऽहि श्रीकृष्णो भगवान् स्वयम्। अवताराऽवतारित्वभेदो नैवाऽत्र विद्यते।। २३।।

**कोटिसूर्यसमप्रभं द्विभुजं मुरलीहस्त किशोरं गोपवेषकम् । परमात्मानमीशं च भक्तानुग्रहविग्रहम् ॥ १ ॥ स्वेच्छामयं**

---

इत्यत्राऽनादिश्रीकृष्णनारायण परब्रह्म पुरुषोत्तममवतारिण निज श्रीहरि स्वमेव वर्णयितु टीकाया—'यद्यपि स्वय ब्रह्मपुराधीशोऽवतारी पुरुषोत्तमोऽनन्ताऽक्षरमुक्तोपसितचरणाऽब्जोऽस्त्यथापि नूनाव्यशोभनायेष्टदेवत्वेन श्रीकृष्णस्य स्वेन स्वीकृतत्वात् तस्य सर्वावतारमहत्त्वाच्च **स्वकीयं पुरुषोत्तमत्वं तत्राऽऽरोप्य** उपासनाप्रदर्शनार्थमाह सदेति । 'श्रीस्वामिनारायणः सोऽय नित्य हृदि मयेक्ष्यते । तिर्यगूर्ध्वमधोऽपारे स्थितः को ह्यर्कतेजसि ॥ २४ ॥ कृतावतारो भगवान् मिलेद् यर्हि स्वय तदा । तस्य रूपान्तरमपि न ध्येय ध्येय एव स. ॥' १४ ॥ इत्येताभ्या श्रीस्वामिनारायणपरमात्मना श्रीकृष्णे स्वस्य पुरुषोत्तमत्वमारोपित तथा श्रीस्वामिनारायणस्वरूप विनाऽन्यावतारोऽपि तत्प्रत्यक्षोपस्थितौ न ध्येय इत्यपि निवेदितमिति श्रीकृष्णाऽवतारस्यावतारी श्रीस्वामिनारायणो भगवान् परमात्मा श्रीहरिरिति वर्णयितु श्रीगोपालानन्दस्वामी अवतारस्वरूप श्रीकृष्ण साकारमावेदयति प्रमाणवाक्येन **ददर्श कृष्णमिति** । कृष्णम्—इद परब्रह्मणोऽभिधान स्वावतारे श्रीकृष्णेऽर्पितम्, पुरुषोत्तमे श्रीकृष्णनिरुक्तिः 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचक. । तयोरैक्य परब्रह्म कृष्ण इत्यभिधीयते' ॥ 'ब्रह्मवैवर्तपुराणे खण्डे द्वितीयेऽध्याये द्वितीये 'कृषिस्तद्भक्तिवचनो नश्च तद्दास्यकारक । भक्तिदास्यप्रदाता यः स कृष्णः परिकीर्तितः ॥ २५ ॥ कृषिश्च सर्ववचनो नकारो बीजवाचकः । सर्वबीज परब्रह्म कृष्ण इत्यभिधीयते' ब्रह्मवै. ख. ४ पूर्वार्धे अ० १३—'ब्रह्मणो वाचकः कोऽयमृकारोऽनन्यवाचकः ५६ । शिवस्य वाचकः पश्च नकारोधर्मवाचकः । अकारो विष्णुवचनः श्वेतद्वीपनिवासिनः ॥ ५७ ॥ नरनारायणार्थस्य विसर्गो वाचकः स्मृत' । सर्वेषा तेजसा राशिः सर्वमूर्तिस्वरूपकः ॥ ५८ ॥ ब्र० वै० ब्रह्मखण्डेऽध्याये १७—'गोलोके द्विभुजः कृष्णो राधाकान्त. सनातनः ॥ ६४ ॥ इत्युक्तो भगवतः परब्रह्मणोऽवतारः श्रीकृष्णो गोलोकेशो द्विभुजोऽत्र दर्शितः । एतत्कृष्णावतारवर्णनेनाऽवतारिणो वर्णन दिव्यमिति श्रीगोपालानन्दस्वामी प्राह **ददर्श कृष्णमिति** कृष्ण श्रीकृष्ण भगवन्तम्, ग्रीष्मसमयस्य सूर्यस्य कोटिशानां किरणाना याः प्रभास्तदुर्वरितप्रभाशालिन सुमूर्त द्विभुज द्विहस्तम्, 'दक्षभुजा ब्रह्मरक्ष्या वामा शक्तिप्रसेविता । पुभुजः स्वयमेवोक्तो वामः श्रीराधिकात्मकः' । 'कृष्णकृष्णात्मकः कृष्णो द्विभुजश्चात्र कीर्त्यते' 'द्वाभ्या भुजाभ्या वर्शी स्वा वादयन्त तु राधिकाम् । रामयन्त कृष्णरूपं रामयामः सखीजन.' 'इत्येव तालिकादानैर्भुजाभ्या स्कन्धसस्पृशः, । गोपीगोपस्वरूपोऽय कृष्णोऽवतारिरूपकृत्' किशोरम् आषोडशाऽपूर्णस्वरूप दिव्यं गोपाना वेष धारयन्तम् । गाः पान्तीति गोपा धेनुपालास्तेषा मयूरपिच्छमुकुटादिसुशोभसुनीशारसुसुरवालसुयष्टिकसुप्रपदीनसुनेपथ्यशिक्कादिधारिण वेष धृतवन्त गोपीगणान्तर्वर्तिन चेति । सुगोपवेषकम्, स्वय स्वरूपसत्सुमूर्तो भगवान् श्रीकृष्णः स्वेच्छया दर्शनादिविहारानुकूलान् वेषान् परिवर्तयतीति

परंब्रह्म परिपूर्णतमं विभुं ब्रह्मविष्णुशिवाद्यैश्च स्तुतं

सुगोपवेषकम्, गावोऽत्रेन्द्रियाणि तेषा वृत्तिसमाकर्पणार्थं समाकर्पकवेपान् सुखरूपाणि विवर्तयतीति तादृश, परमात्मानम्, परमेश्वरस्याऽवतारिणः श्रीहरेरारोपित यत्परमात्मत्व तद्वन्तं स्वयमवतारस्वरूपम्, तथा गोलोकस्थगोपीगोपादिसमग्रभक्तेश तदीश्वर तन्नियामक भक्तानां गोलोकस्थाना भूतलादौ यत्र यत्र कोटिशोऽवतारा वृतास्तत्र तत्र भजमानाना नारीनरादिभक्तानामुपरि योऽनुग्रहो दया तेषा कामपूरणानुकूलतावन्त सुदिव्यशरीर तत्तन्मनोरथपूरकवेपवन्त विशिष्टग्रहवन्त विशेषकलायुक्त भक्ताना यथाविधाना तथाविधानाम् अनु अनुग्रहो वेषो विग्रहो विशिष्टाः कलाश्च तद्वन्तं सूक्ष्म स्थूल च स्वरूप धारयन्त धरन्त च। तत्रापि स्वस्येच्छयैव भक्तेच्छानुकूल प्रायश. स्वरूपमाविष्कुर्वन्त स्वेच्छोपात्ताऽभिमतोरुदेहम्, आरोपित च पूर्णब्रह्मत्व परब्रह्मत्व परिपूर्णतमत्व विभुत्व सर्वथा पुरुषोत्तमप्रदत्त वर्तते यत्र, तादृशम्, ब्रह्मभिर्विष्णुभिः शिवैर्वैराजमहाविष्णुभूमादिभिश्च स्तुत प्रशस्ततया वन्दित स्वनियामकतयाऽऽराधित तथा मुनिगणैः साधुभिर्भक्तैश्च नमस्कृत भगवन्त मुनिर्नारदो ददर्शेति ह्येतदवतारसुमूर्ततापरकवर्णन कृतम्। आधारस्यैव वाक्यस्याऽवतारिसुमूर्ततापरकवर्णनम् **कृष्णम्**—अनादिश्रीकृष्णनारायण परब्रह्म श्रीहरिकृष्णपरमात्मानम्, कोटिसूर्यप्रभा एकस्मिन् वैराजैकरोम्णि, अनन्तवैराजप्रभा महाविष्णौ श्रीमहेकरोम्णि, अनन्तमहाविष्णुप्रभाः प्रधानपुरुषैकरोम्णि, अनन्तप्रधानपुरुषप्रभा महापुरुषैकरोम्णि, अनन्तमुक्तप्रभा अक्षरस्यैकरोम्णि, अक्षरस्य सर्वाः प्रभाः श्रीपुरुषोत्तमस्यैकाग्रे वर्तन्ते एतादृशतेजोनिधिमूर्तिम्, श्रीमस्य प्रकाशितब्रह्मलोकस्य ये कोटिकाटिसूर्याः सूरयो नित्यसूरयो नित्यमुक्ताः अक्षर धाम च, तेषा समा द्योतमाना मूर्तिः साकार. श्रीहरिः तम्। द्विभुजम्, गोलोके तु राधिकासहितश्रीकृष्णस्तयोश्चतुर्भुजत्वम्, श्रीपुरुषोत्तमस्यैकस्य परब्रह्मणस्तु द्विभुजत्व युगलत्वाऽभावात्, मुरली दैत्यहन्त्री अभयदात्री रेखा, भगवदोष्ठयोः प्रेमरसनिष्पादयित्री या निजप्रसन्नता तस्या वैशिष्ट्यबोधयित्री करतलगताऽऽशीर्वादप्रदात्री दिव्या रेखा तत्सहितकरं श्रीहरिम्, किशोरमूर्तिम्, गोपा भगवदानन्दभोक्तारो दिव्या मुक्ताः स्वसारूप्यवन्त', तत्प्रतियोगिस्वरूप दिव्यो वेषो दिव्याकारस्तद्वन्तम्, परमात्मान परममीश्वर सर्वेशान नियामक श्रीहरिम्, भक्ताना मुक्ताना सर्वसृष्टिस्थस्वाश्रिताना दर्शनसेवालाभदानार्थानुग्रहरचितदिव्यतत्तदनुसम्मीलनानुस्वरूपदिव्यसुसमुज्ज्वलविशिष्टानन्तविग्रहम्, अक्षरे धाम्नि परमात्मनः स्वरूपमिद प्रोक्तम्, एनमेव परमात्मान नारायणशब्देन कृष्णशब्देन सर्वावतारिणमाहु. श्रुतय. स्मृतयश्च सर्वलोकप्रशासनकर्ता सर्वेश्वरः निरवधिकातिशयानन्दघनः आनन्दमयमूर्त्तिर्नारायणः कृष्णशब्देनोच्यते, नारायणशब्दो बृहन्नारायणे कृष्णशब्दोऽनादिश्रीकृष्णनारायणे योगरूढः वसुदेवसुतत्वेन प्राविर्भूतस्य श्रीकृष्णभगवतः कृष्णशब्दस्तु परब्रह्मगोऽर्थितः पूर्वयुगेष्वपि भक्तैः श्रीकृष्णशब्देन नारायणशब्देन च परमात्माऽऽराधितः, स परमात्माऽक्षरधामाधिपतिः

श्रीस्वामिनारायणपरमात्मा परब्रह्मेति बोध्यः। तानीमानि पूर्वयुगीयवचनानि—भागवते पृथुचरिते 'आरिराधयिषुः कृष्णमचरत्तप उत्तमम्' अजामिलोपाख्याने 'अजामिलोऽप्यथाऽऽकर्ण्य दूताना यमकृष्णयोः'। 'कृष्णाय नो नमति यच्छिर एकदाऽपि तानानयध्वमसतोऽकृतविष्णुकृत्यान्'। 'यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया'। 'कृष्णाऽङ्घ्रिपद्ममधुलिण्न पुनर्विसृष्टमायागुणेषु रमते वृजिनावहेषु'। भारताख्याने—'सा मा स्मृतिर्मृगदेहेऽपि वीर! कृष्णार्चनप्रभवा नो जहाति' प्रह्लादचरिते 'कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम्' 'मतिर्न कृष्णे परत. स्वतो वा मिथ्याऽभिपद्येत गृहव्रतानाम्' 'एषा ब्रह्मण्यदेवस्य कृष्णस्य च महात्मनः। अवतारकथा पुण्या' ध्रुवाख्याने—'इत्युत्तानपद. पुत्रो ध्रुवः कृष्णपरायणः' 'त कृष्णपादाभिनिविष्टचेतसम्' पुरञ्जनोपाख्याने—'आरिराधयिषु. कृष्ण स जगाम कुलाचलम्' ययातिचरिते च—'सर्वत्र सङ्गमुत्सृज्य स्वप्नौपम्येन भार्गवी। कृष्णे मनः समावेश्य व्यधुनोल्लिङ्गमात्मनः' देवस्तुतौ—'ग्रस्तानि येन नः कृष्ण! तेजास्यस्त्रायुधानि च' 'हसाय दह्रनिलयाय निरीक्षकाय कृष्णाय मृष्टयशसे निरुपक्रमाय' व्यासनारदसवादे' च 'तत्राऽन्वह कृष्णकथाः प्रगायताम्' वैकुण्ठदर्शने' च 'कृष्णात्मना न रज आदधुरुत्स्मयाद्यैः' 'रुद्रगीते' नमो धर्माय बृहते कृष्णायाऽकुण्ठमेधसे' वृत्रोपाख्याने 'इत्थं दृढमतिः कृष्ण आसीत् सङ्ग्राम उल्बण.' प्राचेतसाख्याने 'वासुदेवाय कृष्णाय सात्वता पतये नम.' 'निमिजायन्तेयसवादे' एव कृष्णात्मनाथेषु मनुष्येषु च सौहृदम्' 'सर्वे वेदा यत्पदमामनन्ति' 'नारायणपरा वेदाः' 'वेदैश्च सर्वैरहमेव वेद्यः' 'नताः स्म सर्ववचसा प्रतिष्ठा यत्र शाश्वती' 'एको ह वै नारायण आसीत्' 'दिव्यो देव एको नारायणः' 'अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति' 'सर्वस्य वशिन देव सर्वस्याऽऽयतन हरिम्' 'कृष्णो वै परम दैवतम्' 'नारायणः पर ब्रह्म तत्त्व नारायणः परः' 'नारायणः परो ज्योतिरात्मा नारायणः परः'। 'आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः। सारमेक सुनिष्पन्न ध्येयो नारायण. स्वयम्' नारायणात्परो देवो न भूतो न भविष्यति। एतद्रहस्य वेदाना पुराणाना च सत्तमम्' 'तत्त्व जिज्ञासमानाना हेतुभिः सर्वतोमुखैः। तत्त्वमेको महायोगी हरिर्नारायणः परः' 'कृष्ण एव हि लोकानामुत्पत्तिरपि चाऽव्ययः। कृष्णस्य हि कृते भूतमिद विश्व चराचरम्' 'अयमनादिश्रीकृष्णनारायणपरमात्मा दिव्यगुणसहितसाकारमूर्तिरेव श्रुतिस्मृतिभिर्वर्ण्यते, स एव परमात्मा स्वेच्छामात्रेणानन्तवेषस्वरूपोऽनन्तस्वरूपोऽपि चैकशाश्वतस्वरूपो व्यतिरेक्यप्यन्वयी अन्वय्यपि व्यतिरेकी च सर्वत्र प्रतिपाद्यते, त सर्वत्र पूर्ण पृथक् च सस्तुतमूर्तिक चापि पुराणवाक्य वर्णयति—**स्वेच्छामयं परंब्रह्म परिपूर्णतमं विभुम्। ब्रह्मविष्णुशिवाद्यैश्च स्तुतं मुनिगणैर्नुतमिति। २।**
प्राचुर्यार्थोऽपि भक्तेच्छासमानार्थो मयट्, तत्र भगवदिच्छाप्राधान्ये मयट्सामर्थ्यम्, द्वयोरेकेच्छयाऽनुकूलाचारपरत्वात्, स्वस्य भगवतः स्वेषा भक्तानामिच्छाभिर्यथारामणीयकगोचराभिरिच्छाभिर्वैषबाहुल्यपरत्वात्, ज्ञातुर्निजेच्छया प्रवृत्तेर्भगवतः श्रीहरेर्नित्यसर्वज्ञस्य सर्वकर्मफलप्रदातुः सर्वान्तर्यामिणः सर्वकर्तुस्तस्य स्वेच्छया लीलया लोकरचनावत्त्वसत्त्वेन स्वेच्छा-

मयत्वमुक्तम्, नन्वानन्दघनवत् 'सत्यसकल्पसत्यकामाभ्याम्' स्वेच्छाघनत्वमस्त्विति चेन्न, इच्छाया आनन्दप्रयोज्यत्वात्, विना सुखमिच्छाया असत्त्वेन श्रुत्या यथावस्थितवस्तुवर्णनेन 'आनन्दघन अयमात्मा प्रज्ञानघनः'। 'अस्यैवानन्दस्य मात्रामन्यानि भूतान्युपजीवन्ति'-इत्यादिभिः सच्चिदानन्दस्वरूपस्य परमेश्वरस्याऽऽनन्दस्य स्वरूपस्य ज्ञानात्मकस्य तत इच्छायास्तद्धर्मत्वादिच्छाया मयड्योजनात्, ज्ञानाधीनत्वमानन्दांशत्वमिच्छाया बोधयितु मयटोनुसरणात्, 'लीलात्ततनुः'। 'स्वेच्छाधृताभिमतोरुदेहः' 'सोऽकामयत बहु स्याम्' इत्येतैरिच्छायाः प्राधान्योक्तत्वात् तादर्थ्ये मयटोऽप्यविरोधात्। वस्तुतस्तु लौकिकाऽलौकिकसमस्तकार्यजातस्येच्छाकारणकत्वेन कारणताप्राधान्ये मयड्विधानम्। आनन्दमयस्य वेषान्तरे तेजःसारूप्ये ऐश्वर्यसारूप्ये ज्ञप्तिसारूप्ये वा जवनिकासारूप्येऽपि वेषे इच्छाया व्यापकत्वादेवाऽत्र व्यापकत्वार्थे मयट प्रयोगात्। स्वेच्छाधृतदिव्यप्रतिममिति। 'परब्रह्मेति' पदसान्निध्येन मूलस्वरूपेण निजधामस्थस्य बृहन्नारायणस्याऽक्षरब्रह्माधिपतेः श्रीहरेः स्वीयान्यसर्वनिजवेषावतरणाधियोजनावश्यकतया तत्रेच्छाया प्राथम्यात् परब्रह्मसान्निध्येनेच्छामयत्वमिति स्वेष्टे स्वेष्टसाधनताया आवश्यकत्वद्योतनार्थ मयट्प्रयोगः। अथ बृहद् 'ब्रह्माऽक्षर तेजोमयम्, भगवन्मूर्तिप्रकटिततेजःसर्वस्व धाम, तच्च प्रोक्त श्रुतिषु, तत्परः परमात्मा परब्रह्म, ब्रह्मतः परः बृहत्त्वाद् बृहणत्वाच्च व्यापकत्वात् केवलान्वयित्वात् ब्रह्म, तच्च श्रुतिषु प्रोक्तम्—'दिव्ये ब्रह्मपुरे ह्येष स व्योम्न्यात्मा प्रतिष्ठितः'। 'एतत्सत्य ब्रह्मपुरम्' 'अपहतपाप्मा ह्येष ब्रह्मलोकः'। 'स खल्वेवं वर्तयन् यावदायुष ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते'। 'तदक्षरे परमे व्योमन्'। 'स वेदैतत्परम ब्रह्मधाम यत्र विश्व निहित भाति शुभ्रम्'। 'यो अस्याऽध्यक्षः परमे व्योमन्'। 'हिरण्मये परे लोके विरज ब्रह्म निष्कलम्'। 'पादोऽस्या विश्वाभूतानि त्रिपादस्याऽमृत दिवि' 'ते ह नाक महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः' 'स सामभिरुन्नीयते ब्रह्मलोकम्' 'तद्विष्णोः परम पदम्'। 'यत्र गावो भूरिशृङ्गा अयासः, अत्राह तदुरुगायस्य वृष्णः परम पदमवभाति भूरि'। स्मृतयः 'तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः'। 'यद्गत्वा न निवर्तन्ते तद्धाम परम मम' 'तत्र गत्वा न शोचन्ति न च्यवन्ति व्यथन्ति च'। 'ते तु तद् ब्रह्मणः स्थान प्राप्नुवन्तीह सात्त्विकाः' 'नित्य स्थानमजर चाऽप्रमेयम्'। 'स्थानमेतन्महाराज ध्रुवमेतन्ममाऽक्षरम्'। 'तथाऽन्येषा दिवौकसाम्। स्थानानि निरयास्तात स्थानस्य परमात्मनः' 'ब्रह्मलोकपदान्वेषी याति विष्णोः पर पदम्' शिवपुराणे ख० ५, अ० ५०, पार्वत्युवाच— 'अविनाशि पर धाम मायातीत परात्परम्। श्रुतयो वर्णयन्ते यत् तद्रूप तु ममैव हि॥ ३७॥ सगुण निर्गुण चेति मद्रूप द्विविध मतम्। 'प्राप्याऽवध्य ब्रह्मपुर राजेव स्यामह सुखी'। 'क्षेम विन्दन्ति मत्स्थान यद् ब्रह्म परम विदुः'। 'ब्रह्माख्य धाम ते यान्ति शान्ताः सन्न्यासिनोऽमलाः'। 'धाम तेजोमय तद्धि प्राप्यमेकान्तिकैर्हरेः'। 'यस्याऽक्षरं शरीर यमक्षर न वेद' 'कूटस्थोऽक्षर उच्यते' इत्येताभिर्ब्रह्मधाम प्रोक्तम्, तदेव द्वेधा प्रोक्त विष्णुपुराणे 'द्वे रूपे ब्रह्मणस्तस्य मूर्त चाऽमूर्तमेव च १।२२।५५।' (ब्र० वै० ख० ४-अ-२१) 'अक्षर परम ब्रह्म

ज्योतीरूप सनातनम्' 'गुणातीत निराकार स्वेच्छामयमनन्तकम् ॥ ७९ ॥ भक्तध्यानाय सेवायै नानारूपधर वरम् । शुक्लरक्तपीतश्याम युगानुक्रमणेन च ॥ ८० ॥ 'सत्य ज्ञानमनन्त च पूर्ण चाखण्डमक्षरम् । धाम यद्वासुदेवस्य मूर्त चामूर्तमुच्यते' । 'शुद्ध नित्य चाविकारि मायादीना प्रकाशकम्', तद् ब्रह्मेति विजानीहि सर्वाधारतया मतम्' । एतद्ब्रह्मधाम यस्य प्रकाशः स परमात्मा परब्रह्म, 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । अतोऽस्मि लोके वेदे च प्रथित. पुरुषोत्तम.' ॥ 'हृदये जीववज्जीवे योऽन्तर्यामितया स्थित. । ज्ञेयः स्वतन्त्र ईशोऽसौ सर्वकर्मफलप्रदः ॥ शि० १०७ । 'यत्परं ब्रह्म विश्वात्मा विश्वस्याऽऽयतन महत्' । 'सर्वस्य वशी सर्वस्येशानः' । 'रुक्मवर्ण कर्तारमीशम्' 'स श्रीकृष्णः परब्रह्म भगवान् पुरुषोत्तमः । उपास्य इष्टदेवो नः सर्वकारणकारणम्' श्रीकृष्णोऽनादिश्रीकृष्णनारायणो योऽसौ स भगवान् पुरुषोत्तम. । 'पूर्व पूर्व पूर्वमहमेवेहाऽऽसमिति तत्पुरुषस्य पुरुषत्वम्, तत्रोत्तमत्व पुरुषोत्तमत्वम्, ब्रह्मणोऽपि नियामकत्व परत्वम् , अक्षरब्रह्मतो महद्ब्रह्मतो मुक्तब्रह्मत ईशब्रह्मतो जीवादि ब्रह्मतोऽन्नमयादिब्रह्मतश्च तत्र तत्र यथायोग्य परत्व सामस्त्येन च परत्त्व श्रीहरेः परब्रह्मत्वमिति । स एव परमात्मा **परिपूर्णतम** इति । अक्षरब्रह्मार्थ यद् यद् अपेक्ष्यते सत्त्व चित्त्वम् आनन्दत्व प्रकाशत्व गुणाष्टकत्व षड्भगत्वम् एकोनचत्वारिंशद्गुणवत्त्वम् अनन्तशक्त्यादिमत्त्व सर्वत्र व्याप्तिमत्त्व सर्वभासकत्व सर्वचेतयितृत्व सर्वाऽऽपूरकत्व सर्वाशनानन्दादितृप्तिप्रदत्वमित्यादि यद्यत् तत्सर्व श्रीहरौ परमात्मनि असीमाऽनन्त सभृतम्, तथा मुक्तानामीशाना मायाया मायातत्त्वाना सृष्टीना च भक्तानामपि यद्यदपेक्षित तत् सर्व श्रीहरौ नित्य शाश्वतमसीमानन्त सभृतमिति पूर्णः परमात्मा, अथ यत्पूर्णत्वेन विद्यमान तद् यदि स्वीयेभ्यः सर्वस्व दीयते तथापि नाऽणुमात्रमपि रिक्त भवतीति पूर्णमेवोर्वरितमेवोद्वेल्लमेव मातुमशक्यमेव प्राविर्भवेत् विरसेत् । एवविधया पूर्ण स्वय पूर्णम् अन्यच्च पूरयति न तथाप्यपूर्ण किन्त्वधिकमधिक विकसितेन पूर्यनेतरामिति पूर्यतेतमामिति पूर्णतमम्, उपरि प्रतियोगिषु गुणादिषु नीचैरधिकरणेष्वक्षरादिषु सयुक्तेषु शरीरपदार्थेषु परितोऽपि सर्वदिक्षु पूर्णतममिति परिपूर्णतम परब्रह्मोच्यते सर्वशरीरविशिष्ट परमात्मा सर्वतः परितश्चान्तर्बाह्यनाऽतिशयेन पूरितः सभृतः परिपूर्णतम इति । अथ परविभवव्यूहाऽऽर्चान्तर्यामिस्वरूपेषु षट्सु अंशाकलाऽऽवेशविभूतिपूर्णपरिपूर्णभेदा भगवति भक्तैर्वर्ण्यन्ते, तत्र निर्णीतगुणकलादिमान् पूर्णः अनन्तगुणकलादिसभृतः परिपूर्ण', परब्रह्म तु परिपूर्णतममिति । उक्त ब्रह्मवैवर्ते पूर्वार्धे ख० ४ अ० २२ धेनुक उवाच—'अधुना कृष्णरूपस्त्व परिपूर्णतमः स्वयम् . सर्वेषामवताराणा बीजरूपः सनातनः ॥ ४९ ॥ अनेन पुरुषोत्तमस्य परिपूर्णत्वमुक्त धर्मपुत्रस्य—'त्व च धर्मसुनो भूत्वा लोकनिस्तारकारकः ॥ ४८ ॥ सत्सगिजीवने प्रक० अ० २७ ( भागवतेऽपि ) अंशाऽशाशस्तथाऽऽवेशः कलाः पूर्णः प्रकथ्यते । व्यासाद्यैश्च स्मृत. षष्ठः परिपूर्णतमः स्वयम् ॥ १ ॥ अंशांशस्तु मरीच्यादिरंशा ब्रह्मादयस्तथा । कलाः कपिलकूर्माद्या आवेशा भार्गवादयः ॥ २ ॥ पूर्णो नृसिंहो रामश्च श्वेतद्वीपाधिपो हरिः । वैकुण्ठोऽपि तथा यज्ञो नरनारायणः स्मृतः ॥ ३ ॥

परिपूर्णतमः साक्षाच्छ्रीकृष्णो भगवान् स्वयम् । असख्यब्रह्माण्डपतिर्गोलोके धाम्नि राजते ॥४॥
कार्याधिकार कुर्वन्त. सदशास्ते प्रकीर्तिताः। तत्कार्यभार कुर्वन्तस्तेऽशाऽशा विदिताः प्रभोः ॥५॥
येषामन्तर्गतो विष्णुः कार्य कृत्वा विनिर्गतः। नानावेशावतारश्च विद्धि राजन् महामते ॥ ६ ॥
धर्म विज्ञाय कृत्वा य पुनरन्तरधीयत । युगे युगे वर्तमानः सोऽवतार. कला हरे. ॥ ७ ॥
चतुर्व्यूहा भवेद् यत्र दृश्यन्ते च रसा नव । अतः पर च वीर्याणि स तु पूर्णः प्रकथ्यते ॥८॥
यस्मिन् सर्वाणि तेजासि लीयन्ते च स्वतेजसि । त वदन्ति परे साक्षात् परिपूर्णतमः स्वयम् ॥९॥
परिपूर्णतम. साक्षाच्छ्रीकृष्णो नान्य एव हि । एककार्यार्थमागत्य कोटिकार्य चकार ह ॥ १० ॥
'ब्र० वै० ख० ४ पूर्वार्धे० अ० ९—'ब्रह्मेशशेषविघ्नेशाः कूर्मो धर्मोऽहमेव च । नरश्च कार्तिकेयश्च श्रीकृष्णाशा वय नव' ।१०। 'शूकरो वामन. कल्किर्बौद्धः कपिलमीनकौ । एते चाऽशाः कलाश्चाऽन्ये सन्त्येव कतिधा मुने ।११। कूर्मो नृसिंहो रामश्च श्वेतद्वीपविराड् विभुः । परिपूर्णतमः कृष्णो वैकुण्ठे गोकुले स्वयम् ।१२। एषु वाक्येषु परिपूर्णतमोऽनादिश्रीकृष्णनारायणपरमात्मा परब्रह्म वर्णितो निजावतारस्वरूपश्रीकृष्ण स्वमतिप्रिय द्वारीकृत्येति श्रीगोपालानन्दस्वामिनामाशयो बोध्यः । अवतारे परिपूर्णतमत्वमवतारिण एवेत्यर्थव्यञ्जक पदमाह—**विभुमिति** । व्यापकः **परब्रह्म परमात्मा ब्रह्मद्वाराऽन्तर्यामिशक्तिद्वारा, न त्ववतारो व्यापको विभुः,** अवतारर्याधीनत्वात् ब्रह्मवत् सर्वत्राऽन्वयाऽभावात् , कार्यनिमित्तकवेषस्य निरानन्त्यात् कार्यमात्रव्याप्त्या तदितरप्रासरनावश्यकत्वात् , मत्स्यकूर्मयोर्जले व्याप्तिः, नृसिंहवाराहयोर्वने व्याप्तिः, कपिलदत्तात्रेययोर्निर्जने व्याप्तिः, पृथुरामश्रीकृष्णाना प्रजाशासने व्याप्तिः, व्यासादीना निबन्धे व्याप्तिः, परब्रह्मणस्तु सर्वावतारिणः सर्वत्र व्याप्तिरिति परिपूर्णतमत्व परब्रह्मणि विभुत्वपदेन निश्चीयते, तस्माद् अत्यन्ताभावाऽप्रतियोगित्व केवलान्वयित्व सर्वत्र वृत्तिमत्त्व सर्वयोगित्व सर्वगामित्व सर्वान्तरात्मत्व चेत्यात्मक यद् विभुत्व सर्वाविर्भावावस्थातिरोभावावस्थादिसत्तावत्त्व नियामकत्व च यत्र विभुत्व तत्रैव सहकृतमिति विभुत्वसहकृतनियामकत्वस्य परिपूर्णतमत्वाऽविनाभूतस्य परमात्मनि सर्वावतारिणि ब्रह्मधामनिवासिनि सर्वनिवासिनि अपरिच्छिन्नधामिनि वर्तते न तु परिच्छिन्नधामधामिनि तत्र तत्राऽवतारे इति गोपालानन्दस्वाम्यभिप्रायः । गोपालानन्दस्वामी य परमात्मानमुपास्ते स परमात्मा स्वयमाह सुधासिन्धौ मध्यतरङ्गे १३ 'परे ब्रह्मणि य. प्रोक्तो भगवान् दिव्यविग्रहः । सोऽहमेव भवाम्यत्र स्थितो दिव्यनराकृतिः' 'तरगे १४६ रामकृष्णादय. सर्वेऽवताराः सन्त्यतो हि मे । पुरुषोत्तमस्य वित्तत्येनत्मत्य ब्रवीमि व' ।६३। तरगे १२२—'स्वामिनारायणः सोऽय नित्य हृदि मयेक्ष्यते' तिर्यगूर्ध्वमधोऽपारे स्थितः कोट्यर्कतेजसि ।२४। कृतावतारो भगवान् मिलेद् यर्हि स्वय तदा । तस्य रूपान्तरमपि न ध्येय ध्येय एव स.' ।१४। इत्येव परब्रह्मैव श्रीहरि सर्वावतायुक्तः अथ **स्तुतमिति** सामवेदेन स्तुतम्, त परमात्मान ब्रह्मा विष्णु शिव ईश्वरा मुक्ता अक्षरब्रह्म च स्तुवन्ति । यथाशक्तियथामतियथागतियथाप्राप्तिस्तथा स्तुवन्ति, स्तुति.—गुणकर्मैश्वर्यसामर्थ्यलीलावेषाविर्भावकारणकार्याद्यात्मक प्रशसन मननस्फुरणध्यानात्मक तदनुकूलवाक्यगानाद्यात्मक चेति । ब्रह्माऽस्तोत्—

'क्वाऽहं तमोमहदहंखचराऽग्निवार्भूसंवेष्टिताण्डघटसप्तवितस्तिकायः। क्वेदृग्विधाऽविगणिताण्ड-पराणुचर्यावाताध्वरोमविवरस्य च ते महित्वम्' इत्यादिभिः। गरुडपुराणे शंकरः प्राह ब्रह्माणम्—'अहं ध्यायामि तं विष्णुं (परब्रह्म) परमात्मानमीश्वरम्। सर्वदं सर्वगं सर्वं सर्वप्राणिहृदि स्थितम्। भस्मोद्धूलितदेहस्तु जटारुद्राक्षमण्डितः। विष्णोराराधनार्थं मे व्रतमेतत् पितामह'। विष्णुरहस्ये विष्णुः प्राह—'सत्यं ब्रवीमि ते शंभो गोपनीयमिदं मम। मृत्युसञ्जीवनीं नाम कृष्णाख्यामवधारय'। दासमुक्ता ऊचुः—'त्वयोपभुक्तस्रग्गन्धवासोऽलंकारचर्चिताः। उच्छिष्टभोजिनो दासास्तव मायां जयेमहि'। 'शृण्वन् गृणन् संस्मरयंश्च चिन्तयन्नामानि रूपाणि च मंगलानि ते। क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचेता न भवाय कल्पते॥ 'अयि व्यपश्यस्त्वमजस्य मायां परस्य पुंसः परदेवतायाः। अहं कलानामृषभो विमुह्ये यया वशोऽन्ये किमुताऽस्वतन्त्राः' 'अहं सनत्कुमारश्च नारदो भगवानजः। कपिलोऽपान्तरतमो देवलो धर्म आसुरिः॥ मरीचिप्रमुखाश्चान्ये सिद्धेशाः पारदर्शनाः। विदाम न वयं सर्वे यन्माया माययावृताः॥ इतीश्वराः प्राहुः 'त्वदङ्घ्र्युपास्तिबलिनस्तव मायां जयेमहि'। ऋग्वेदे—(१-१५४-१) 'विष्णोर्नु कं वीर्याणि यः पार्थिवानि विममे रजांसि। यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः' 'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे॥' 'कूर्मपुराणे भगवानाह-अ-१-परात्परतरं तत्त्वं परं ब्रह्मैकमव्ययम्' ।९३। ऐश्वर्यं तस्य यन्नित्यं विभूतिरिति गीयते' ।९४। अथ सामवेदसंहितोपनिषदि (ऋ० १०—७१—९) 'इमे ये नाऽर्वाङ् परश्चरन्ति, न ब्राह्मणासो न सुतेकरासः। त एते वाचमभिपद्य पापया, सिरीस्तन्त्रं तन्वते अप्रजज्ञः' 'ओं तिस्रो वाच उदीरते गावो मिमन्ति धेनवः। हरिरेति कनिक्रदत्, (ऋ० ९-३३-४) 'ओम् अचिक्रदत् वृषाहरिर्महान् मित्रो न दर्शतः। स सूर्येण दिद्युते' (ऋ० ९—२—६)' 'ओं तिस्रो वाच ईरयति प्रवह्निः, ऋतस्य धीतिं ब्रह्मणो मनीषाम्, गावो यान्ति गोपतिं पृच्छमानाः, सोमं यान्ति मतयो वावशानाः' (सा० ५।६।३) 'सा० ५।६।५। ऋ० ९।७७।१)—'ओं धर्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः हरिः सृजानो अत्यो न सत्वभिः वृथा पाजांसि कृणुते नदीश्वा' 'सा० आ० पव० काण्डे ६।४।९। 'ओं हरीत इन्द्र श्मश्रूण्युतो ते हरितौ हरी तं त्वा स्तुवन्ति कवयः पुरुषासो वनर्गवः' (सा० उ० २+६।१०) ओं पवते हर्यतो हरिरति ह्वरांसि रंह्या, अभ्यर्ष स्तोतृभ्यो वीरवद् यशः' 'सा० उ० ५।२।१—२,३,४,५ 'ऋ० वे० ९।३९।१-२,-४-३-५, 'ओं आयुरर्ष बृहन्मते परिप्रियेण धाम्ना। यत्रा देवा इति ब्रुवन्' 'ओं परिष्कृण्वन्ननिष्कृतं जनाय यातयन्निषः। वृष्टिं दिवः परि स्रव ॥७७॥ 'ओं अयं स यो दिवस्परि रघुयामा पवित्र आ। सिन्धोरूर्मा व्यक्षरत्' 'ओं सुत एति पवित्र आ त्विषिं दधान ओजसा, विचक्षाणो विरोचयन्'। 'ओं आविवासन् परावतो अथो अर्वावतः सुतः। इन्द्राय सिच्यते मधु' '(सा० उ० १०।५।३, ५) 'ओम् एष नृभिर्विनीयते दिवो मूर्धा वृषासुतः, सोमो वनेषु विश्वजित्'।

## मुनिगणैर्नुतमिति ॥ २ ॥
## मार्कण्डेयपुराणे एका मूर्तिरनिर्देशा,

ओं शुष्म्यसिष्यददन्तरीक्षे वृषाहरिः (वृषवृषापुत्रः—धर्मभक्तिसुतो हरिः) "पुनानः इन्दुरिन्द्रमा" ॥ "सा० उ० ७।७।३—"ओं अभिक्रन्दन् कलश वाज्यर्षति । पतिर्दिवः शतधारो विचक्षणः, हरिर्मित्रस्य सदनेषु सीदति, मर्मृजानोऽविभिः सिन्धुभिर्वृषा" ॥ "सा० उ० ६।६।१०। ऋ० ९–१००–७—"ओं—त्वा रिहन्ति धीतयो हरि पवित्रे अद्रुहः, वत्स जात न मातरः पवमान विधर्मणि" ॥ 'सा० उ० १२ + २।६। ऋ० ९।१०१।१५— "ओं स वीरो दक्षसाधनो वियस्तस्तम्भ सोदसी, हरिः पवित्रे अव्यत वेधा न योनिमासदम्" ॥ इत्येवमक्षरधामस्थो वृषवृषासुतः श्रीहरिः स्तूयते ॥ परब्रह्मपरमात्मा श्रीहरिर्धर्मपुत्रोऽत्र स्तूयते । **मुनीति**—मुनीना भगवन्मात्रव्यापृतवाचा शीलसयमशालिना भगवदर्थसर्वव्यापाराणां साध्यमात्रतपोधनाना भगवदर्पितचैतन्यात्मना साधुव्रताना साधनचतुष्टयसम्पन्नाना महाभागवताना ब्रह्मनिष्ठाना ब्रह्मविदा ब्रह्मस्वरूपाणा परब्रह्मानन्दाशनाना मुक्ताना मुमुक्षूणा चाश्रिताना शरणागताना देहिनामपि नतिविषयं परब्रह्म । यद्यप्यार्ताना जिज्ञासूनामर्थार्थिना ज्ञानिनामपि नत्यादिविषय तथापि अस्वार्थनतिविषयमत्र विवक्षित, तथात्वेन मुनीनामेव साधुनामेव त्यक्तस्वातिरिक्तसमस्तानामेव भगवन्मात्रमग्नानामेवेति । गणैरित्यनेन सत्सगमण्डल स्मार्यते, तेन 'नृत्यन्ति गायन्ति गृणन्त्यभीक्ष्ग मिथोऽभिसगम्य भजन्ति हृच्छयम् । पश्यन्ति नन्दन्ति सभाजयन्ति त हरि सदःस्थ समपूजयन्त्यपि' इत्युत्सवा अपि स्मार्यन्ते । गण्यन्ते निजाश्रयत्वेन भगवता ये ते गणाः शिष्यसमुदायाः मुनयश्च साधवश्च तद्भिन्नाश्च ये साध्वतिरिक्ताश्रमस्थास्ते सर्वेऽपि नारीनरा आबालवृद्धाः सुज्ञा विज्ञा अज्ञा अपि अतिज्ञाश्च सर्वेऽपि सर्वज्ञा भगवन्तं भजन्ते, **नुतमिति**–दृष्टः स्पृष्टो नतो वा कृतपरिचरणः पूजितो भोजितो वा, रब्धः श्लिष्टो धृतो वाऽऽचरितसुरमणश्चुम्बितो रामितो वा । भुक्तश्चावःहितो वा विरचितसमलकार आकाङ्क्षितो वा, ध्यातः श्रीस्वामिनारायण हृद रटितो मोक्षकृत्स्यात् कृपालुः ॥ ब्रह्म विष्णुशिवाद्यैश्च स्तुतमित्यनेनेश्वरदेवर्षिमध्यदर्शितवेषत्व सूचितम्' मुनिगणैश्च नुतमित्यनेन यत्र यत्र लोकेषु मुनयः साधवो यतयो ब्रह्मचारिणो मानवाद्या विचरन्ति तत्र तत्र तन्मध्यदर्शितवेषत्वमपि परमात्मनो निवेदितम् । अथ मार्कण्डेयपुराणस्य वाक्येन दिव्यश्वेतसाकारभगवन्मूर्तिर्योगिजनदर्शनविषयेति प्रतिपाद्यते—'**एका मूर्तिरनिर्देशेत्यादिना**' श्रीवेदव्यासविरचिते मार्कण्डेयसवादात्मके पुराणे प्रोक्ता, **एका मूर्तिः** परस्वरूपा श्रीहरिमूर्तिरेका, परमाणुमात्रविषमत्वेऽपि द्वितीया स्यात् सा नास्ति यस्य यद्रूपविषमवेषाऽत एकैव, व्यतिरिक्तनियामकस्वरूपत्वेन त्वेकैव, द्वितीयाया अप्रयोजनात्, **मूर्तिः**—स्वरूपसत्साकारप्रतिमः आनन्दघनकिशोराकृतिः, नित्यशुद्धबुद्धमुक्तस्वभावाऽनन्तदिव्यगुणवत्साकारमूर्तिः सुमूर्तान्तर्यामिशक्तिद्वारकव्यापकताव-त्सूक्ष्मजडचेतनशरीरविशिष्टस्वसमानेतरवर्जितो दिव्यमुक्तादिदर्शनीयमूर्तिर्नित्यैकज्ञानानन्दघन-

## शुक्लां पश्यन्ति तां बुधाः ज्वालामालोपरुद्धांगीम्

स्वरूपसन्निरवधिकमहैश्वर्यज्ञानशक्तिसामर्थ्यविभूषितसत्यसंकल्पात्मकभगविशिष्टाऽविभक्तनामरूप-चिदचिद्विशिष्ट एक एव परमात्मा विशिष्टस्वज्ञाता नित्यज्ञानप्रकाशाऽऽश्रयो नित्यानन्द-गुणाद्याश्रयो व्यतिरेकी स्वयं राजाधिराजो महाप्रळये महाकालमहामायाद्युपकरणविशिष्टः स्वयं दिव्यकिशोरमूर्तिर्विराजतेऽनन्तमुक्तमण्डलसेवित इति **अनिर्देशेति** । निर्दिश्यतेऽङ्गुल्यादिभिः स्थूलभावा या या तद्भिन्ना, मानुषस्वरूपा भूत्वा या भक्तान्निर्दिशति सा निर्देशा मानवसमाना सृष्टिदेहिसमाना या या तद्भिन्ना मुक्तब्रह्मनिर्देशा स्वावतारात्मकादिभिर्निर्देशा स्वनिष्ठ-गुणैश्वर्यादिचेतनमुक्तनिर्देशा दर्शनार्हा सेयं दिव्येति । अथाऽनिर्देश्यभगवन्निवासादक्षरधाम्नोऽप्य-निर्देशेति संज्ञा, स्थानिनः स्थानपरिचायकत्वात्, गोपालस्य गोलोकवत् शाश्वतस्थानिनः शाश्वतस्थानवत्तया नामाऽपि शाश्वतम् । अथ कथं शब्दस्य शाश्वतत्वम् ? भगवन्मूर्त्यात्मकत्वात् सूक्ष्मदशापन्नस्य नित्यस्य तस्य सर्वदा सत्त्वात् शब्दात्मकप्रणवस्य चेतनपदार्थत्वात्, भगवन्मूर्तौ निवासिना चेतनमात्रत्वात्, नामनामिनोस्तादात्म्यात् शब्दब्रह्मणि निष्णातस्य परब्रह्माधिगमात्, अस्ति हि शब्दो भौतिकोऽपि यावद्द्रव्यभावी, गमने सर्वत्रोपलब्धेः, प्रणवस्य ब्रह्मणि सर्वत्र तादात्म्यात् ब्रह्मात्मकप्रकाशस्य परमात्मनि द्रव्यगुणात्मकत्वाद् अपृथक्सिद्धतादात्म्यात्, तथा च ब्रह्मविमर्शबिन्दुनादध्वनिक्रमेण शब्दस्य ब्रह्मात्मकत्वं भावना-वत्त्वं प्रयोजकत्वं प्रवर्तकत्वं चाऽभिधेयार्थवत्त्वं नित्यसप्रकृतत्वमपि न विरुद्धम्, सर्वकारण-कारणे परमात्मन्यनुपसर्गात् । अथ दिव्यमूर्तेरक्षरधामस्थाया दर्शनं नित्यप्रत्यक्षदर्शिनां मुक्तानां सदा भवतीत्याह—**शुक्लामिति** गौरवर्णां तां श्रीपुरुषोत्तमस्य मूर्तिं पश्यन्ति, अक्षरे धाम्नि वर्तमानाः **बुधा** नित्यबोधवन्तो नित्यमुक्ता ब्रह्ममुक्ता ओतमाना श्रीहरिमूर्तिं पश्यन्ति । कथं गौरवर्णाम् ? इत्याकाङ्क्षायामाह **ज्वालेति**—ज्वलन्ति तीव्रतया प्रकाशन्ते इति ज्वालाः मूर्तिनिर्गतकिरणास्तेषां विविधा मालाः पङ्क्तयः परितोऽनुवर्तुलायमानाः सर्वदिक्षु व्याप्ताः अथापि सर्वदिक्षु व्याप्तज्वालात्मकमक्षरं धाम, अथ मूर्तावेव निरन्तरं नित्यं स्थितं यत्तेजोमूर्त्यवच्छिन्नं तदक्षरधाम वाऽन्यदिति ? अक्षरधामत्वेन व्यवहारतापन्नं मूर्ति-बहिर्यत्तदेव मूर्तिस्थं धामात्मकं न तु भिन्नम्, किन्तु स्थानावच्छिन्नतया मूर्तिमण्डल-मुच्यते मूर्तिपरिधिरुच्यते, मूर्तिद्युतिरुच्यते, ततः प्रसृतं चाऽक्षरधामोच्यते । अतो धाम-मालोपरुद्धांगीमित्यनुक्त्वा ज्वालामालोपरुद्धाङ्गीमित्युक्तिः । सर्वाणि भगवन्मूर्त्यंगानि सर्वा भगवन्मूर्तिस्तेजःसंभृतोपरुद्धा नाऽणुमात्रापि रिक्तेति। एतादृशीं भगवन्मूर्तिं **योगिनः** पश्यन्ति नित्यप्रत्यक्षदर्शिनो योगिनो निर्विकल्पकसमाध्यवस्थाः । एषा निर्विकल्पकतया नित्यप्रत्यक्षदर्शिता **दर्शननिष्ठा** परा, नाऽस्याः **पराऽन्या निष्ठा** विद्यते । यद्यपि भगवतस्तेजोगुणादीनामनन्ताऽ-पारत्वात् परानिष्ठावत्त्वं कस्यापि न भवति तथापि निजकृपापात्रयोगिनां दर्शनपराकाष्ठामा-पादयति भगवान्, दर्शनदानकृपाकालीना, ततोऽन्यकालीना तु न परा, अनन्तत्वेनाऽपारत्वस्य

**निष्ठा सा योगिनां परा ॥ ३ ॥ रूपवर्णादयस्तस्या न भावाः कल्पनामयाः अस्त्येव सा सदा शुद्धा सुप्रतिष्ठैकरूपिणी ॥ ४ ॥**

तत्र वर्तनात् । अगानि चाप्येकरसानन्दघनचैतन्यात्मकानि तत्त्वमेकमेवेति तत्त्वाभिप्रायेण एकेति प्रयोगः, अगाभिव्यवहाराभिप्रायेण यथापेक्षव्यवहारः नाऽत्रोपरोध्यरोधकभावोऽपि तत्त्वैक्ये तथात्वाऽभावात् । अपि तु आनन्दघनतेजःस्वरूपदर्शपात्रमिति वक्तु शक्यम् । अथाऽविद्यया कल्पितमिदं रूपमित्यत आह **रूपवर्णादयस्तस्या नेति** । तस्या अक्षरधामस्थमूर्तेः रूपमौज्ज्वल्यसुघटताद्यात्मक वर्णः श्वेतता गौरता आनन्दसुखमोदप्रमोदाद्या भावाः अन्येऽपि गुणविभूत्यैश्वर्यशक्त्यादयः, अन्ये च प्रसादकृपाशान्तिकामादयो भावाः, अवस्थाविशेषा अपि भावाः, न **कल्पनामयाः** कल्पनामात्रा न, कि तर्हि ? अकल्पिता वास्तवाः सन्त एव चेतना भावास्ते स्वरूपमन्वित्याऽऽनन्दसाकारभगवच्छ्रीहरिनिष्ठ षाड्गुण्यमष्टगुणक चापि भावाः, तेऽपि सन्त एव, नोत्पन्ना न चागन्तुकाः, किन्तु नित्यतादात्म्यसम्बद्धाः, आनन्दसत्तामात्रताऽपि भावता, नैते वस्तुशून्या विकल्पमात्रतत्त्वाः, तस्या इति षष्ठ्या तादात्म्यवृत्तिः आवेदिता, भावा इति बहुत्वम् अनन्तगुणादिज्ञापकम्, यद्यपि भगवान् सत्यस्तद्गुणाः सत्या अपि तु निराकारवादिभिः कल्प्यन्ते तज्ज्ञापनाय मयट्प्रयोगः कल्पनामया नेति अदृश्ये कल्पना अवास्तविक्योऽपि प्रवर्तन्ते साकारे दिव्यकिशोरस्वरूपेऽक्षरधामस्थे श्रीहरौ श्रीस्वामिनारायणे न कल्पनाः स्थानविषयाः, सर्वे भावाः सत्याः न निराकारवादिवत् अभावात्मका ब्रह्मात्मकाः, किन्तु भावधर्मात्मका एव, प्रवृत्तिनिमित्तार्थाऽनपह्नुवात् लक्षणायाश्च सर्वेष्वनुसरणाऽनावश्यकत्व।चेति **सा** मूर्तिः **सदा** शाश्वती **शुद्धा**ऽस्त्येव, शुद्धत्व विभूत्यादितत्त्वान्तरतादात्म्यानभिप्रेतस्वरूपसत्त्वम् । अथ काऽशुद्धिः ?, शुद्धिविपरीताऽशुद्धिः, आनन्दघनस्वरूपसत्साकारमूर्तिभिन्न तत्त्व परमेश्वरेऽशुद्धिः आत्मनि चेतने मायिकससर्गो यथाऽशुद्धिः, तथा परमात्मनि आनन्दघने स्वेतरतनुभूतविभूतिवर्ष्माऽशुद्धिः, निराकारवादिना निराकारत्वात्मकक्षतिनिवृत्त्यर्थ स्वीकृता परब्रह्मणो या निवासभूता विभूतिसंज्ञा नित्या तनुः सेय साकारा मूर्तिः परमात्मन इति या स्वीकृतिः सा एकामशुद्धि परिहरतो द्वितीयाऽशुद्धिः, अतो न विभूतिमूर्तिः किन्तु आनन्दघनस्वरूपसन्मूर्तिः सैषा शाश्वती मूर्तिः शाश्वती शुद्धिः इत्येव शुद्धा **मूर्तिः अस्त्येवेति** शाश्वताऽस्तित्ववती ; अथाऽस्याः शाश्वतत्वमपि शाश्वतम्, नैतावताऽनवस्था, तादात्म्येन धर्मे विश्रामात्, यद्वा स्वरूपतः शाश्वतस्य तथाविधधर्माऽनपेक्षणात्, तदर्थमाह—**सुप्रतिष्ठेति** मूर्तेः स्था स्थितिः सुप्रति स्वस्वरूपमात्रे, सुपद शाश्वतार्थबोधकम्, प्रतिपद तादात्म्यबोधकम् शाश्वते आनन्दघने तत्त्वे तादात्म्येन मूर्तेरवस्थितिरिति तदर्थः । सुप्रतिष्ठेति सुसमीचीना परिवर्तनरहिता प्रतिष्ठा स्थितिः, अथ रूप रूपं प्रतिरूपो बभूव मुक्त मुक्त प्रति प्रतिस्वरूपोऽभवदय कथ सुशाश्वताऽपरिवर्तनप्रतिष्ठः ?, इत्थम्—स्वरूपे नाऽणुमात्रा विषमता स्वरूपेषु नाशेनापि व्यशता किन्त्वव्यंशताऽविषमताऽनन्तस्वरूपा अपि स्वस्मिन्नेकस्मिन् समानाभिहारे

स्कन्दपुराणे वासुदेवमाहात्म्ये सहोदिताऽर्कायुतज्ज्ञास्वरे तत्र तेजसि वासुदेवं ददर्शाऽसौ रम्यादिव्यासिताकृतिम् ॥ ५ ॥

अथ दिव्यत्वेऽपि मनुष्यरूपे श्रुतिः

---

नाणुमात्रमपि व्याप्तिशून्यता तादात्म्याभिन्नाऽसमता अत्र हेतु**माहैकरूपिणीति**। यतः साऽऽनन्दघनकिशोरस्वरूपसती न द्वित्वाश्रया द्वित्वं हि भिन्नाकारे व्याप्तम्, भेदो हि अणुमात्र-न्यूनाधिक्यप्रयोज्यः विगुणावयवयोगप्रयोज्यश्च, स चात्रैकरसघनभगवन्मूर्तौ नास्ति, द्वित्वमेव नास्तीति, मूर्तित्वद्वित्वयोर्व्याप्तिर्नास्तीति, एकस्वरूपत्वात् आनन्दघनात्मकैकमूर्तित्वात्, एकत्वेनाऽभिन्नत्वेनाऽणवशेनाप्यवैषम्येण रूप्यते इत्येकरूपिणी स्वेन स्वरूपेण स्वरूप्यते स्वैः स्वरूपैः स्वरूप्यन्ते बहुस्वरूपमूर्तयः ता अपि एकस्वरूपसमभिहारस्वरूपानुप्रविष्टा इति अद्वितीयस्वरूपिणी एकस्वरूपिणीति। शाश्वतैकावस्थानस्वरूपिणीति। ४। अथाऽक्षरधामस्थभगवद्दिव्यमूर्तौ स्कन्दपुराणीयवासुदेवमाहात्म्यस्य प्रमाणमाह **स्कन्दपुराणे वासुदेवमाहात्म्ये** इत्यादिना **सहोदितेति** भगवन्मूर्तेर्द्योतमानत्वं यथाबुद्धिबलोदयं प्रोक्तं 'ज्ञानं विशुद्धं विमलं विशोकम-शेषलोभादिनिरस्तसङ्गम्। एकं सदेकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति॥' अत्र परब्रह्म परमवासुदेवः प्रोक्तो वेदितव्यः। **सहोदिताऽर्काऽयुतेति**। सह एककालाव-च्छेदेन एकदेशावच्छेदेन च यथासमावेशम्, उदितानि मध्याह्नवेलायामुपरिगतानि यान्यर्काणामयुतानि दशसाहस्राणां साहस्राणि, कोटिकोट्यर्कसमप्रभमिति पूर्वोक्तेनैकार्थ्यात्, तेषां घनस्वरवद् भास्वरे कोटिसूर्यपटलवत्प्रकाशिते, तत्राऽक्षरधाम्नि तेजसि भगवन्मूर्ति-प्रकाशात्मकेऽक्षरे धाम्नि **असौ** नारदः **वासुदेवं** परवासुदेवम्, व्यापकं दिव्यं परस्वरूपं श्रीपरब्रह्म पुरुषोत्तमम् **रम्येति**। रम्या रमणीया द्योतमाना याऽऽसिता श्वेतवर्णा धवला गौरवर्णाऽऽकृतिर्मूर्तिस्ताम्, यद्वा रम्या दिव्याऽसिता घनश्यामाऽऽकृतिर्यस्य तं श्रीपुरुषोत्तमं श्रीहरिं स्वामिनारायणपरमात्मानं स्वरूपसदानन्दघनमूर्तिं श्रीहरिकृष्णं भगवन्तं ददर्श। अत्र मुक्तदर्शनार्हः किशोरः श्रीहरिः सुमूर्तो वर्णितः। अथार्कः कथमुक्तः चन्द्रमस्तेजसः शीतत्वेनाऽमृतवर्षित्वेन बहुगुणत्वेऽपि चन्द्रः कथं नोक्त इति चेन्न, औज्ज्वल्यप्रशस्तौ तात्पर्यात्, अमृतसुधाप्राशस्त्यादौ तु चन्द्रग्रहणौचित्यात्। भास्वरत्वोक्तौ भगवतोऽपि प्रकाशधर्मवत्त्वसिद्धिरिति तत्र तेजसीत्यनेन भगवत्प्रकाशात्मकाऽक्षरब्रह्मलोकात्मकस्थाने दिव्यमूर्तित्वं बोधितम्। वासुदेवो नाऽयमपर-वासुदेवः योऽमृतधामवासी वर्ण्यते अयं तु परवासुदेवः श्वेतद्वीपवास्यपि न सः, अक्षरे तस्याऽस्थितेः। तस्मात् परमः परमात्मा श्रीहरिर्वासुदेवशब्देन विवक्षितः। आकृतिरत्र सुदृश्यसुस्वरूपसद्दिव्यमूर्तिः, न त्ववयवयोगविशेषाः एकरसानन्दघनमूर्तौ तथाविधसंयोगाऽभावात्, रम्यत्वं यावदरम्यव्यावर्तकम्, दिव्यत्वं यावद्दिव्यत्वव्यावर्तकम्, असितत्वं सितत्वं वा तत्तदितर-व्यावृत्त्यर्थम्। वस्तुतस्तु श्वेतेऽपि परमात्मनि घनश्यामत्वं न विरुद्धम्, सुरूपवर्णनप्राशस्त्ये तात्पर्यात्। औज्ज्वल्यं द्योतमानत्वं प्रकाशमानत्वं सर्वप्रभासभृतत्वं च प्रशंसितं भवति, तदन्यद्

अप्रशासितमिति सितत्वाऽसितत्वे तु तन्मूर्तिद्रष्टृदृग्विषयावलम्बिनत्वे मूर्तौ विरुद्धधर्मवत्त्वाऽभावात्। एकविधस्यैव भास्वरत्वस्य शाश्वतत्वात् **असाविति** तत्र गतिमन्त मुक्त दर्शनशक्तिमन्त निवेदयति। निर्विकल्पकसमाधिमानपि तेन गृह्यते, कृपापात्रमपि दिव्यदृष्टिमच्चापि 'दिव्य ददामि ते चक्षु'रिति निर्दिष्टमपि गृह्यते। उक्त भगवद्धाम्नि भगवतो दिव्यमूर्तित्वम्। अथ या निराकारनिर्गुणत्वपरकश्रुतयः 'निष्कल निष्क्रिय शान्त निरवद्य निरञ्जनम्'। 'साक्षी चेता केवला निर्गुणश्च' 'अस्थूलमनण्वमह्स्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसगमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमनन्तरम - बाह्य निर्गुणम्'। 'अद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्र तदपाणिपादम्'। 'अशब्दमस्पर्शमरूपम्'। 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविर शुद्धमपापविद्धम्' 'अशरीर शरीरेष्वनवस्थेष्ववस्थितम्'। 'नैव च तस्य लिङ्गम्' 'दिव्यो ह्यमूर्तः पुरुष.' 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' 'त्वमकरणः स्वराडखिलकारकशक्तिधरः' 'निर्गुणस्याऽप्रमेयस्य'। 'रूपवर्णादिनिर्देशविशेषपरिवर्जितः'। ता एता मायिकाकारगुणादिवर्जितत्व वर्णयन्ति, तत्र गुणनिषेधपराणि वचनानि प्राकृतहेयगुणनिषेधपराणि शरीरादिनिषेधपराणि च प्राकृतशरीरादिनिषेधपराणि, भगवतः कल्याणगुणवत्त्वे दिव्यसाकारसदानन्दघनस्वरूपत्वे च न कश्चिद्विरोधः, तथा च निष्कलमित्यादीनामयमर्थः जीवात्मनः कलाः सुखप्रदा धर्माः चैतन्यकला प्रथमा, निर्णयकला द्वितीया, अभिमतिकला तृतीया, मननकला चतुर्थी, चिन्तनकला पञ्चमी, प्राणनजीवनकला षष्ठी, दशाऽऽलोचनकर्मकला इति षोडशकलाः, उपनिषदि षोडशकलोऽय पुरुष उक्तः। दशेन्द्रियशक्तयः पञ्चप्राणनशक्तयः एका मननशक्तिरिति षोडश कलाः आत्मशक्तयः एताः निःशेषाः समग्राः सम्पूर्णाः क्षतिरहिताः कलाः शक्तयो यस्य स षोडशकलः पुरुष आत्मा, तथा परमात्माऽऽनन्दमूर्तिः नित्यसर्वज्ञः निःशेषाः सर्वाः कलाः असंख्याः शक्तयो यस्य स निष्कल इति सर्वकल इत्युक्तः ज्ञानशक्तिबलैश्वर्यवीर्यतेजोविधारणनियमनव्यापनबहुभवनसर्वान्वयनव्यतिरेचनतादात्म्यभवनकर्त्रकर्त्रन्यथाकरणाद्यसख्य - कलाभिः सम्पूर्णः परमात्मेति निष्क्रिय पराधीनक्रियारहितं स्वतन्त्रसर्वलीलम्, शान्तं नित्यसुखशान्तिसंभृतम्, निरवद्यम्-अवद्य मायाऽऽवलिता तद्रहितम्, निरञ्जनम् अजनम् अज्ञानपराभवस्तद्रहितम्। साक्षी अन्तर्द्रष्टा, चेताश्चेतयिता सर्वात्मनाम्, केवलः-व्यतिरेकस्वरूपः परमात्मा, निर्गुणः सकलहेयगुणरहितो दिव्यगुणवान्। अस्थूलमित्यादि-मायिकस्थौल्याणुत्वह्रस्वत्वदीर्घत्वरक्तत्वस्निग्धत्वरहितम्, अच्छायम्-आवरणरहितमारपारदृष्टिगोचरस्वच्छत्वम् अतमः बुद्धेरविकास आन्ध्य तद्रहितम्, अवायुः वायुगुणस्पर्शरहित व्यस्पर्शसहितम् अनाकाशम्-दरीभावरहितम्, असगम्-स्वेतरलेपरहितम्, अरसमित्यादि-मायिकरसगन्धचक्षुःश्रोत्रवाङ्मनस्तेजोरहितं दिव्यरसगन्धचक्षुःश्रोत्रवाङ्मनस्तेजःसहितम्, अप्राणम्, प्राणानपेक्षम्, असुखं न सुखगुणः किन्तु सुखाश्रयो द्रव्यम्, अत्यन्तसुखाश्रयः, मात्राणि मायिकशब्दादयस्तद्रहितम्, अनन्तरम् अन्तरम् आन्तरिकविच्छेदस्तद्रहितम् अबाह्यम्-बाह्यं परिच्छिन्न सीम, तद्रहितम्।

**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥ १ ॥ मुण्डकोपनिषदि च 'यद्भूतयोनि परिपश्यन्ति धीराः, तस्य धीराः परिपश्यन्ति योनिम् ॥२॥ ( टीका ) योनिं जन्मप्रकारम्, धीराः धीमतामग्रेसराः ॥ ३ ॥**

---

अद्रेश्यम्-मायिकचक्षुरविषयम् अग्राह्यम्-मायिककराऽग्राह्यम्, अगोत्रम् कालपरिच्छेद्यसन्तानभावरहितम्, अवर्णम्—वर्णो ब्राह्मणत्वादिस्तद्रहितम्, अचक्षुःश्रोत्रम्-मायिकनेत्रकर्णरहितम्, तदपाणिपादम् मायिककरचरणरहितम्, किन्तु आनन्दघनस्वरूपसन्मूर्तिमयचक्षुःश्रोत्रकरचरणादिसहितम्, आनन्दमात्रकरपादमुखोदरादिरिति स्मृतेः। अशब्दमित्यादि-मायिकशब्दस्पर्शरूपरहित दिव्यशब्दादिसहितम्, सः परमात्मा, पर्यगात् सर्वत्र व्याप्तिमान्, शुक्रम्-प्रोज्ज्वल सर्वोज्ज्वलम्, अकायम्—मायिकनिकायरहितम्, विभूतितनुनिरपेक्षम् अतिव्यापक सुखम् अप्यते प्राप्यते यत्र तदकाय सर्वसुखनिधिम्, अव्रणम्-मध्यरिक्तभावावकाशरहितम्, आरपारदर्शनार्हमूर्तिरिति सावकाशता अस्नाविर मायिकस्नाय्वादिरहितम्, विभूतिशरीरस्नाय्वाद्यनपेक्ष च, शुद्धम्-सच्चिदानन्दघनमात्रस्वरूपसन्मूर्तिरिति। अपापविद्धम्-मायाऽविद्याऽज्ञानाऽध्यासाऽवभासाऽसन्मिथ्याविपर्ययसन्देहाऽधर्ममायिकदुर्गुणादयः पापानि तैः असस्पृष्टम्, अशरीरम्—मायिकशरीररहितम्, दिव्यानन्दगुणस्वरूपसदानन्दघनमूर्तिः निजशरीरेषु जडचेतनेषु अन्तर्यामितयाऽवस्थितम्, लिङ्गम्-कारण लिंगशरीर वासनामय च यस्य नास्ति, परमात्मनो लिङ्ग लय गच्छतीति लिङ्ग लयस्वभावो नास्ति, धर्माऽधर्माधिवासिततासंसर्गोऽपि नास्तीति, श्रुतिसिद्धे परमात्मनि लिङ्गस्य व्यावर्तकस्य हेतोरपेक्षा नास्तीति, यद्यपि 'जन्माद्यस्य यतः' इत्यनेन तटस्थलक्षणमुक्तम्, तदपि श्रुतिमूलम्, स्वरूपलक्षणमपि तदुपासनार्थम्, अनुमित्यर्थमेवेति तु नैकान्तता, नाममात्रेण विलक्षणस्य तस्य निर्णयात् अनुमानरसिकस्य तु व्यावृत्तिः प्रयोजनम्, नैतावता तत्र विरामः, अपरोक्षसाक्षात्कारपर्यन्तानुधावनात्, अधिकानि लिङ्गानि श्रुतयो यत्रेति अलिङ्गम्, श्रुतिवेद्यम्-लीनमर्थमात्मकर्मफलादि गमयतीति लिङ्ग वा इत्येव परमात्मनो निराकारत्व नास्त्येव श्रुतीना साकारार्थानुपरत्वात्। तथा च श्रीहरेः अनादिनित्यसिद्धदिव्याकृतित्व वास्तविक शाश्वतम्। तदभाववत्त्व नैव सिद्ध्यतीति कासाञ्चिदपि श्रुतीना तदभाववत्त्वे तात्पर्याऽभावात्।

अथ दिव्यस्य तस्याऽक्षरधामनिवासस्य परमात्मनः साकारस्य भक्तानुकम्पया सृष्टौ देवमानुषादिदिव्यस्वरूपत्व मानुषवेषत्वं चापि श्रुतिसिद्धमाह—अथ दिव्यत्वेऽपि मनुष्यरूपे श्रुतिः ( सामवेदे—उ०अ० ८।२।५) इद विष्णुर्विचक्रमे त्रेधा निदधे पदमिति ॥ १ ॥ पक्षे दिव्यदेवभावबोधिका श्रुतिरियम्—विष्णुः स्वय व्यापकः परब्रह्म परमात्मा, विष्णुतनुस्वरूप-परमात्मा वा कश्यपसुतो वामनः सन् बलिनृपस्य यज्ञे निजत्रिपदप्रमाणभूमिकायाचकः सन् निजीयं व्यापकत्वात्मकमैश्वर्यं दर्शयन् सन् ब्रह्माण्डमभिव्याप्य सस्थित निज स्वरूप प्रदर्श्य पदं पादसक्रमण पादन्यास त्रेधा त्रिप्रकार कृत्वा तत्रैकं पादन्यासं

## नारायणोपनिषदि 'ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः ॥ ३ ॥'

सर्वपृथिव्या द्वितीय पादन्यास सत्यलोके मध्यतनौ पञ्चलोकान् भुवःस्वर्महर्जनस्तपःसञ्ज्ञान् समाविश्य तृतीयं पादन्यास बलिमस्तके कृत्वा बलि पाताल प्रावेशयत् इत्येवं त्रेधा पदं निदधे व्यापारयत्, इद चतुर्दशभुवनात्मक ब्रह्माण्डं विचक्रमे पादसक्रमणगोचर चक्रे, अनेन दिव्यदेवत्व वामनस्वरूपे च दिव्यमानववेषत्व दर्शितम्। यद्वा दिव्योऽपि भगवान् मानवस्वरूप. सन् भक्तिधर्मात्मजश्चतुर्धा हरिः कृष्णो नरश्च नारायणश्च सन् पद व्रतन्यास त्रेधा राजधर्मपद श्रीकृष्णः सन् साधुधर्मपद श्रीहरिः सन् तपश्चर्यापद नरनारायणः सन् भेजे, इद जगत् पराक्रमोपदेशतपोभिः सररक्षेति। यद्वा देवानुवेष मानवानुवेषं तिर्यगनुवेषं च धृत्वा जगद् ररक्ष, यद्वा मोहिनीनारीस्वरूप रामकृष्णादिपुरुषस्वरूप सनकादिबालस्वरूपं च त्रेधा पद विदधे, यद्वा दिव्यव्यूहस्वरूप दिव्यविभवस्वरूप दिव्यार्चास्वरूप चेति त्रेधा निदधे पदम्, यद्वा पद लीला सात्त्विकीं राजसीं तामसीं च प्रचक्रे, यद्वा त्रेधा कृष्णा लोहिता शुक्ला च तनू दधार, यद्वा ज्ञानकाण्ड कर्मकाण्ड भक्तिकाण्ड च भक्तेषु निदधे स्वोपदेशद्वारा साधनात्मकमिति, यद्वा इद भूतलमधिश्रित्य मानववेषः श्रीहरिः शीलव्रतप्रकरणं भक्तिव्रतप्रकरण समाधिव्रतप्रकरण च निदधे प्रवर्तयामास। यद्वा बालपद तपस्विपद सद्गुरुपद च त्रेधा स्वीचकार (ऋ० १।२।७) 'यो अस्कभायदुत्तर सधस्थ विचक्रमाणस्त्रेधोरुगाय'। त्रिलोककीर्तिर्भगवान् सौधस्थो मानवो विहरतीति (ऋ० १।१५४।१) 'विष्णोर्नु क वीर्याणि प्रवोच य. पार्थिवानि विममे रजासि' श्रीहरिचरित्राणि भूरजोऽधिकानि सन्तीति। अथ मुण्डकोपनिषदि चेति **यद्भूतयोनिमिति** धीराः धीमन्तो विवेकिनो भक्तिमन्त उपासका ध्यातारः समाधिमन्तो योगिनः कृपापात्राणि **भूतयोनिम्**–भूताना सृष्टीना कारण विशिष्ट कारणं योनि परमेश्वर दिव्यमूर्तिमपि, यत् **तस्य** परमात्मनो योनिं मानववेषवत्त्वं दिव्यैक्य च धीरास्तत्प्रदत्तदिव्यदृष्टय एव परिपश्यन्ति साक्षात् कुर्वन्ति, तस्य टीकामाह–**जन्मप्रकारम्**, प्रादुर्भावरीतिम्, धीमदग्रेसरा जानन्तीति, तदुक्त ब्रह्मवैवर्ते 'आज्ञापालकोऽपानवायुर्गर्भकुक्षलीमाश्रित्य भगवदाज्ञया बालकगर्भदृश्य करोति स एव बालरूपो निःसरति स चाऽदृश्यो भगवॉश्च बालरूपो दृश्यो भवतीति जन्मरीति लिखिता योगिनो दिव्यदृशः पश्यन्तीति 'सदिति ब्रह्मणः शब्दस्तद्वन्तो ये भवन्त्युत। साजात्याद् ब्राह्मणस्त्वेते तेन सन्तः प्रचक्षते' (ब्रह्माण्डपुराणे २।३२।२०) 'एतादृशाः सन्तो दिव्य मानव चोभय जन्मप्रकार पश्यन्ति, किं बहुना ब्रह्मवैवर्ते श्रीराधिका वायुनिःसरणसमये शिशुतनुं कृत्वाऽऽविर्बभूवे'त्युक्तम् (४।१३।९५) एवं मुक्तानामपि प्राविर्भावा वायुद्वारा उक्ता न तु गर्भवासद्वारेति। अत्र भगवदवतारात्मक मानववेष दिव्यमपि मानवस्वरूपमाह–**ब्रह्मण्य** इत्यादिना। ब्रह्मणि साधुर्ब्राह्मणेषु साधुर्ब्रह्मणि भवश्च ब्रह्मयोक्ता च ब्रह्मण्यः, ब्राह्मणकुलाना साधुयतिमुनिब्रह्मशीलिसाध्वीशरणागतादीना भागवताना सात्त्वतानामात्मनिवेदिना त्यागिना च सुखदाता सर्वदाता ब्रह्मण्य इति दिव्यमानववेषो भगवान् **देवकीपुत्र** इति स एव परब्रह्म निजावतार देवकीपुत्रमभेदेन दिव्य निजवेषात्मक निजेनाऽर्पित पुरुषोत्त-

वेदस्तुतौ दुरवगमाऽऽत्मतत्त्वनिगमाय स चाऽऽत्ततनोः ॥ १ ॥ भागवतप्रथमे 'स वै किलाऽयं पुरुषः पुरातनो य एक आसीत्' ॥२॥ तृतीये अजस्य जन्मोत्पथनाशनाय कर्माण्यकर्तुर्ग्रहणाय पुंसाम् । नन्वन्यथा

---

मत्व च कुक्षीकृत्याऽवर्णयत् । अत एव स्वाऽभेदेन दिव्यमानववेषो देवक्याः पुत्रः देवस्य धर्मदेवस्य या किः–किरणिका सा देवकी धर्मागना मूर्तिः भक्तिदेवी तस्य पुत्रा घनश्यामः श्रीस्वामिनारायणो मानववेषो दिव्यमानवस्वरूपो भगवान्, स एवाऽय दिव्यमानवः परब्रह्मणि स्वस्मिन् ब्रह्मणि च स्वप्रकाशे धामनि ब्रह्मकुले धर्मदेवकुले ब्रह्मनिष्ठसाधुकुले च साधुः हितकरो भुक्तिमुक्तिप्रदः अथ च मधोः ससाररागस्य सूदनो विनाशक इति । स्वरूपशीलवर्तनत्यागिस्थितिचमत्कारसमाध्याविर्भावाध्यात्मिकाद्युपदेशकरुणादिभिरुभय-लोकयोरुभयाऽऽविर्भावयोश्च हितकरो भुक्तिमुक्तिकर इति दिव्यपरब्रह्मणो धर्मजत्वेऽपि दिव्य-मानववेषत्वमुक्तम् ।

अथ **वेदस्तुतौ** प्रोक्तम्–**दुरवगमेत्यादिना** । सः परब्रह्मपरमात्मा श्रीहरिर्दिव्योऽपि मायिकवृत्तिमता परोक्षतया निजशरणागताना दुरवगम स्वरूपस्वभावगुणाकृत्याद्युक्त याद्दग् यथाविध ताद्दक् तथाविधम् आत्मनोऽपि आत्मतया स्थित यदात्मतत्त्व परमात्मतत्त्व दिव्यस्वरूपसदानन्दघनमूर्ति धाम्नि स्थितमप्यात्मनि साक्षितया स्थित सूक्ष्ममपि साकार दिव्य तस्यैव निश्चयैकभावनया गमोऽवगमः पौरुषेयो बोधस्तस्मै, गमः साक्षाद् दर्शन तदर्थ च, मानववेषेण आत्ततनोः उपात्तदिव्यमानवधर्मात्मजवेषस्य यथावत् पारमार्थ्तुं कोऽपि न क्षम इति तत्र तत्कृपापात्राण्येव क्षमाः साधव इति मात्रादिभ्यो दिव्यदर्शन मानववेषतादात्म्यदिव्य-साक्षात्कारः स्वयमकारीति अथ भागवतप्रथमस्कन्धप्रमाणमाह **स वै किलाऽयमिति** । परब्रह्म परमात्मा श्रीहरिः स एवाऽयमत्राऽस्मच्चक्षुर्गोचरदिव्यमानववपुर्धरो घनश्यामो वर्तते, यः पुरातनः पुरुषः सृष्ट्यादावप्यासीदिति भागवततृतीयस्कन्धप्रमाणमाह **अजस्येत्या-दिना** । जन्मादिरहितस्यापि परमात्मनो दिव्यमूर्तेर्जन्म प्राकट्यं दिव्यमानववेषदर्शनदानम् उत्पथस्याऽधर्मपथस्याऽधर्मपथस्थाना च नाशनाय भवति । **अकर्तुरिति** । कर्माऽकर्तुरपि कर्म-रहितस्य कर्मफलाऽभोक्तुरपि दिव्यश्रीहरेरत्र भुवि दिव्यमानववेषेण कर्माणि मानवादिचरित्राणि अपि पुसा मानवाना कर्मठाना सत्कर्मणा ग्रहणाय, सत्कर्मकरणार्थ शिष्टतयैवेति 'न बुद्धिभेद जनयेदज्ञाना कर्मसगिनाम्' । 'लोकसग्रहमेवापि सपश्यन् कर्तुमर्हसि' । 'अप्रायण तु तद्दर्शनात्' 'परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया । गृहीतचेता राजर्षे आख्यान यदधीतवान्' इत्याद्यैः सत्कर्मनिष्कामकर्मविधेर्मण्डनात् । **नन्वन्यथेति** । यद्येव प्रयोजन न स्यात् तर्हि तस्याजस्य जन्माऽकर्तुश्च कर्मकरणं घटेन ! नैव घटेत, घटित च करोति ततोऽन्यजीवाना तद्द्वारा कल्याणार्थमिति लोकसग्रहार्थमिति निश्चीयते । **पर इति** । गुणाना मायिकगुणाना त्रिगुणानाम-

**कोऽर्हति देहयोगं परो गुणानामपि कर्मतन्त्रम् ॥ ३ ॥ दशमे रूपं यत्तत्प्राहुरव्यक्तमाद्यं ब्रह्मज्योतिर्निर्गुणं निर्विकारम्। सत्तामात्रं निर्विशेषं निरीहं स त्वं साक्षाद् विष्णुरध्यात्मदीपः ॥ ४ ॥**

---

सख्यगुणानामपि असम्बन्धवान् परः परमात्मा दिव्यमूर्तिः परब्रह्म स्वयम्, **कर्मतन्त्रम्**-कर्माधीनमिव कर्मार्हमिति अन्यदर्शनगोचरकर्मव्याप्तमिति, **देहयोगम्**-दिव्यमानवशरीरवेषम्, **योगम्**-शरीरस्थितमिव शरीराधीनमिव शरीरसयोगयोगम्, कोऽन्यो भगवन्त विनाऽर्हति दिव्यमानवलीलाचरित्रार्हसुसम्पत्तिकशरीरादिसमन्वयार्थं योग्यो भवतीति । नैव भवतीति । तथा च भगवान् दिव्यो दिव्यमानववेषो लोकसग्रहार्थमेव जायते इति ॥ ३ ॥ अथ भागवते दशमे प्रोक्तम्-**रूपमिति** । रूप स्वरूप यत् परमात्मा स्वयम् आनन्दघनदिव्यमूर्तिः तत् स्वरूप स्वयम्, धाम्न्येव मुक्तैर्दृश्यते, धामातिरिक्ते स्थले तु निजेच्छया दृश्यते, विनेच्छा न दृश्यते न व्यज्यते इत्यव्यक्तम्, **आद्यम्** आद्यानामपि 'यत्र पूर्वे साध्याः सन्ति देवाः' इत्याद्याना पूर्वेषा नित्याना सार्वदिकानामपि आद्य व्यापक समव्यापक सुमूर्तस्वरूप **ब्रह्म** व्यापकमन्वयि सद् व्यतिरेकि **ज्योतिः** स्वप्रकाशं निजप्रकाशपूर्णं द्योतमान **निर्गुणं** मायिकगुणरहित दिव्यगुणसहित **निर्विकारं** विकारोऽवयवजन्याऽवयविनि यथा पुष्पस्याऽतिजलयोगे पूतिगन्धिक्लिन्नता भवतीति विरुद्धो कारो विकारो विपरीतद्रव्यभावो नित्यदिव्यमूर्तिः परमात्मनि नास्तीति, यथा दग्धतृणाना भस्मभाव इति परमेशस्य विकारो नास्तीति, अथेन्द्रियादिविकारः कामक्रोधाद्यात्मकः सोऽपि नास्तीति निर्विकारम्। **सत्तामात्रमिति** । सन् परमात्माऽऽनन्दघनः स्वरूपसदानन्दघनमूर्तिः सत्पदार्थः प्रागभावध्वसाऽप्रतियोगी, निरुपाख्याऽसद्विरोधि, सत्ताशब्दप्रयोगेण सत्ताधर्मस्य सति परमात्मनि दर्शितत्वेन सत्तासमानाधिकरणाः समव्याप्ता अन्येऽपि धर्मा गुणाद्याश्च सिद्धा एवेति । **निर्विशेषम्**-शान्तघोरमूढात्मका विशेषा मायिकगुणादिविकाराः षाट्कौशिकत्वमपि विशेषत्वम्, 'चित्र यथाऽऽश्रयमृते स्थाण्वादिभ्यो विना यथा छाया। तद्वद्विना विशेषैर्न तिष्ठति निराश्रय लिङ्गम् ॥' 'सूक्ष्मा मातापितृजाः सहप्रभूतैस्त्रिधा विशेषाः स्युः' । अन्तःकरणेन्द्रियाणि प्राणा विशेषाः सूक्ष्माः, मातापितृजा देहाः स्थूला विशेषाः, प्रभूतानि स्थूलभूतानि विशेषाः, ये ये शान्तघोरमूढस्वरूपास्ते विशेषाः, विशेषान्वितं सूक्ष्मशरीरमपि विशेषः, वासनाऽपि शान्तघोरमूढा लिंगशरीरस्वरूपा विशेषाख्या इति मायैव विशेषा विलक्षणविशेषा माया, विशेषण मायाऽपि शान्तघोरमूढतात्मकपारिभाषिकविशेषात्मिका, परब्रह्मणि स्वरूपे मायारहितत्व निर्विशेषत्वम्, सविशेषोऽपि भगवान्निर्विशेषः सकलजडचेतनविशेषितोऽपि भगवान् मायिकशान्तघोरमूढतारहितो निर्विशेष इति। **निरीहम्**-ईहा तृष्णा, अपूर्णस्य वृत्तिस्तृष्णा, अनेकविधा एषणा वासनात्मिकयः, अभिलाषाश्च भोगेच्छाः, ता ईहा यस्य न सन्तीति निरीहः, सत्यपि इच्छागुणवत्त्वे सगुणे परब्रह्मणि अतृप्त्यभावेन ईहा एषणा मायिकी भोगेहा नास्तीति निरीहः परमात्मा । **सः** रूपादिभिः परिवर्णितः

**त्रय्या चोपनिषद्भिश्च सांख्ययोगैश्च सात्वतैः।**
**उपगीयमानमाहात्म्यं हरिं साऽमन्यताऽऽत्मजम् ॥ ५ ॥**

**एकादशे 'राजन् परस्य तनुभृज्जननाऽप्ययेहामायाविडम्बनमवेहि यथा नटस्य। सृष्ट्वाऽऽत्मनेदमनुविश्य विहृत्य चाऽन्ते संहृत्य चाऽऽत्ममहिमोपरतः स आस्ते॥**

---

साकार एव परमात्माऽत्र भूतले प्रत्यक्ष इत्याह **त्वमिति**। धामस्थदिव्यस्य दिव्यमानुषवेषत्वमत्र भूतलेऽपि दर्शितम्। तत्पुष्ट्यर्थमाह **साक्षादिति** मानुषाऽक्षप्रत्यक्षविषयार्थकोऽयमव्ययः, एकदेशस्थोऽपि असङ्ख्यदेशस्थोऽपि सर्वदेशस्थो व्यापकोऽन्तःप्रविष्टो दिव्यस्वरूपो बहिरपि दिव्यमानवस्वरूपो व्यापक इत्यर्थमाह—**विष्णुरिति**। वेवेष्टीति अन्तर्नियमयतीति शरीरीति परब्रह्मपरमात्मा श्रीहरि श्रीस्वामिनारायणभगवान्। **अध्यात्मदीपः** आत्मस्वधीत्यध्यात्मम्, यद् यद् आत्मसु कर्मगुणादिकं वर्तते तस्य तस्य प्रकाशकरोऽन्तर्यामी च साक्षी च दीपः परमात्मा, कर्मफलप्रदाता करुणानन्दप्रदाता सर्वसुखमोक्षदाता, निजानन्ददाता स्वस्वरूपसर्वस्वप्रदातेति। अध्यात्मदीपेति अन्तर्यामित्वं विष्णुरिति व्यापकत्वं साक्षादिति प्रत्यक्षमानवदिव्यवेषत्वं निरीहमिति तृष्णारहितत्वं निर्विशेषमिति मायिकतत्त्वरहितत्वं सत्तामात्रमिति दिव्यधर्मगुणादियुगानन्दघनमूर्तित्वं निर्विकारमिति द्रव्यविजातीयान्तर्विजातीयद्रव्यभिन्नत्वं निर्गुणमिति मायिकगुणरहितत्वं दिव्यगुणसहितत्वं ब्रह्मेति परब्रह्मत्वं ज्योतिरिति स्वप्रकाशत्वम् आद्येति सर्वादिपरमपुरुषत्वम् अव्यक्तमिति सर्वैरग्राह्यत्वं रूपमिति सर्वत्र सदाऽऽनन्दघनस्वरूपसुमूर्तित्वमिति वर्णितम्। प्रोक्तमनेन दिव्यपरमपुरुषस्य दिव्यमानवमूर्तित्वमिति प्रोक्तम् ॥४॥

**त्रय्येति**। ऋग्वेदयजुर्वेदसामवेदास्त्रिवेदाः, वेदाना त्रय्या, उपनिषत्प्रोक्तब्रह्मविद्याभिः, साङ्ख्येन योगेन च नारदपञ्चरात्रादिभिः सात्त्वततन्त्रैः सात्त्वतैश्च साधुभिर्यस्य श्रीहरेर्दिव्यसाकारस्य माहात्म्यम् उपगीतम् ऋग्वेदेन देवतात्मा, यजुर्वेदेन मन्त्रात्मा, सामवेदेन स्तुत्यात्मा, भगवान् वर्णितः, उपनिषद्भिरुपास्यसर्वात्मा वर्णितः, साङ्ख्येन निर्लेपः प्रकृत्यधिष्ठाता, योगेनात्मनि ध्येयतया पञ्चरात्रेण साकारस्वामितया सात्त्वतैस्तु सर्वत्र सदा सेव्यदिव्यमूर्तितया वर्णितः, सर्वैश्च व्यापकाऽन्तर्यामिसाक्षिप्रतिनियतान्वयिव्यतिरेकितया च सर्वविशिष्टतया वर्णितः परमात्मा दिव्योऽपि धृतदिव्यमानववेषो निजवद् वर्णितः, **सा** माता देवकी भक्तिदेवी **तम्** आत्मजम्, निजदेहाऽऽविर्भूतं हरिं पुरुषोत्तमनारायणं हरिकृष्णं श्रीकृष्णनारायणं स्वपुत्रममन्यत, भगवता सङ्कोचं प्रापितया बुद्ध्या माता स्वपुत्रममन्यत, दिव्यबालममन्यत, वेदादिप्रतिपाद्यो दिव्यपरमेश्वरः स एव मात्रा सम्मतो मानवदिव्यात्मजवेषः स एव पुत्र इति उभयभावो दिव्यो दिव्यमानवश्च दर्शितः ॥ ५ ॥ **एकादशे राजन् परस्येति** हे राजन्! परस्य परमात्मनो दिव्यानन्दविग्रहस्य, तनुभृता कर्माधीनशरीरिणामिव जननं प्राकट्यम् अप्ययस्तिरोभावश्च ईहया स्वेच्छयैव स्वसंकल्पेनैव मायाया जवनिकाया विडम्बनम् अनुकरणं

दशमे 'बर्हापीडं नटवरवपुः कर्णयोः कर्णिकारं बिभ्रद्वासः कनककपिशं वैजयन्तीं च मालाम् । रन्ध्रान् वेणोरधरसुधया पूरयन् गोपवृन्दैर्वृन्दारण्यं स्वपद-रमणं प्राविशद् गीतकीर्तिः ॥७॥ भागवते प्रथमे—स एष नरलोकेऽस्मिन्नवतीर्णः स्वमायया । रेमे स्त्रीरत्नकूटस्थो भगवान् प्राकृतो यथा ॥८॥ ब्रह्मपुराणे—अज्ञत्वं पारवश्यत्वं विधिभेदादिकं तथा । तथा प्राकृतदेहत्वं देहत्यागादिकं तथा । असुराणां विमोहाय दोषा विष्णोर्नहि क्वचित् ॥ ९ ॥

---

मायिकजीववन्मायिकचरणादीना विडम्बनम् अवलम्बनम् अनुसरण गूढचमत्कारिप्रकटमानवाकार सर्वमवेहि जानीहि । स दिव्यः परमात्माऽऽत्मना कारणरूपः स्वय स्वशरीरद्वारा जडचेतनवर्ग-द्वारा स्थूलभावप्रापितेन तेन तनुना सृष्ट्वेद तत्सर्वमनुप्रविश्याऽन्तर्यामितया स्थित्वा विहृत्य तत्सर्वात्मना लीलाः कृत्वा च तत्सर्वस्याऽन्ते विलयनसमये च तत्सर्व सहृत्य चान्वितोऽपीदानीं सूक्ष्मविशिष्टः शरीरमहिमाऽपीदानीं निजात्मशरीरिमहिमा सन्नुपरतः कार्यानुकूलप्रवर्तनाप्रति-लोमितो निवर्तनानुलोमितः स आस्ते, अत्राऽर्धेन दिव्यमानववेषविहारादि प्रतिपादितम् उत्तरार्द्धेन दिव्यधामगतलीलाविहारादि प्रतिपादितम् ॥ ६ ॥ **दशमे बर्हापीड-मिति** । बर्हाणि मयूरपिच्छानि तत्कृत आपीड उष्णिगाभूषण तत् बिभ्रत् नटवरः सुवेषो नट इव सुरूपः स्वरूपः स्वलकृतः सुन्दरः सुकामपूरः कमनीयवपुर्भगवान् कर्णयोः कर्णिकापिशगपुष्पगुच्छौ बिभ्रत्, कनकवच्चश्चद्वास बिभ्रत्, वैजयन्तीं च बहु-जातीयकुसुमग्रथिता माला दिव्या च तथाविधा निजा मालिका बिभ्रत्, वेणोः वश्या राधिकावताररूपायाः, रन्ध्रान् शब्दवत्स्वरार्थविवरान्, अधरसुधान्वितश्वासवायुना पूरयन्, गोपाना बालना वृन्दास्तैर्गीतकीर्तिः दिव्यमानवलीलो भगवान्, स्वपदाभ्या रमण पुण्य रमणीय यत् वृन्दारण्य वृन्दायास्तुलसीस्वरूपैः स्थिताया अधिष्ठानभूतम् अरण्य मुनीनां मुक्ताना भक्ताना च सत्सगस्य स्थान प्राविशत् । अथ नटवरसमाना तनुर्यस्य स घन-श्याममहाराजः केकिपिच्छचन्द्रसुशोभितटोपिका बिभ्रत्, कर्णयोः कर्णिकासमपिशगस्वर्ण-गुच्छफुल्ले बिभ्रत्, पीताम्बर कट्या बिभ्रत्, कण्ठे वैजयन्तीं च माला बिभ्रत्, उरसि गुणग्रथितस्वाभाविकहार बिभ्रत्, वेणुनामकवादित्र निजौष्ठपवनपूरित निनादयन्, गोपाः छप्पयापुरस्थबालास्तैः प्रशसितयशाः श्रीहरिर्निजपादसचरणपवित्र भक्तवृन्दाना निवासम-भितो यद् आम्रारण्य तत् प्राविशत् ॥ ७ ॥ **भागवते प्रथमे स एष** इति । सः अक्षर-ब्रह्मलोकस्थः परमात्मा परब्रह्म निजतेजोविशेषावतारः श्रीकृष्णनारायणः स्वमायया निजेच्छ-याऽस्मिंल्लोके चतुर्मुखस्य ब्रह्माण्डे वाराहकल्पीये भारते खण्डेऽवतीर्णो धृतमानवदिव्यवेषः सन् धृतघनश्यामस्वरूपः सन्, स्त्रीरत्नाना युवतीना कूटाः समुदाया गर्गसहिताप्रोक्ताः तन्मध्यस्थः तन्मण्डलान्तर्वर्तिधृतयौवनवेषस्तदानीन्तनमात्रः, निजभक्तिकारिण्योऽत एव स्त्रीवर्गेषु

मानुष्ये दिव्यत्वे च श्रुती—यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ १ ॥ इदं विष्णुर्विचक्रमे ॥ २ ॥ भगवद्गीतायाम्—

रत्नवन्मूल्यमान्या याः भक्तस्त्रियस्तासां कूटाः समुदाया गुर्जरसौराष्ट्राद्यनेकदेशनगरग्रामादिगता भक्तनारीनिवहा नरनिवहाश्च तासां तेषां मध्ये सभासु समुत्सवेषु च भगवान् धर्मपुत्रः श्रीहरिः, परमेश्वरोऽपि, **प्राकृतो यथा** प्रकृतिर्माया तज्जन्यशरीरवानिव, सर्वजनसौशील्यमीलनश्रीमान् साधारणमानव इव दिव्यमानववेषो निगूढसर्वचमत्कारः सन् रेमे, सचमत्कारोऽप्यचमत्कार इव रेमे निजलीलाम् आबालयुववृद्धानुकूलां चकारेति । अनेन परब्रह्मणः श्रीकृष्णभगवत्स्वरूपेण निजदिव्यमानववेषता दर्शिता **ब्रह्मपुराणे—अज्ञत्त्वमिति** विष्णोः व्यापकस्यान्तर्यामिणः परस्य परब्रह्मणः श्रीहरेरत्र भक्तमण्डलमध्यवर्तिधृतदिव्यमानवाकारवेषस्य मानवस्येवाऽज्ञानित्यमल्पज्ञानित्वं पराधीनत्वम् । विध्याज्ञाया राजाज्ञाया च वर्तमानत्व निषेधादौ निरोधवत्त्वं भिन्नतया भिन्नतया च सर्वेषां परिगणनावत्त्व विधीनां भेदो लयस्तदादि च, **तथा**—प्राकृतस्य मायिकतत्त्वकूटस्य यो देहः स्थूलादिस्तद्वत्त्व च, देहस्य धारण जन्म, देहस्य त्यागो मरणं देहत्यजन चेत्यादि यद् यद्, तत्तत् स्वाकृपापात्राणां भगवद्द्रोहिणां सत्सगद्रोहिणां भक्तद्रोहिणां धर्मद्रोहिणां मोक्षद्रोहिणां मन्दिरमूर्तिवेदशास्त्रयज्ञसत्कर्मद्रोहिणाम् आसुराणां जीवानां विमोहाय भगवद्बोधाऽपात्राणां 'अय न भगवानिति' मिथ्याज्ञाननिश्चयार्थं सर्वं भवतीति ते दोषा विष्णोः परब्रह्मणो न भवन्ति, दिव्यमानववेषधारिणि परमात्मनि तद्दोषाऽभावात् प्राकृता ये ये दोषास्तेषामभावात्, **क्वचिदपि** दोषक्रियादर्शनसत्त्वेऽपि निर्दोषता, वह्नेः सर्वभस्मकरणतावत् श्रीहरेः सर्वपापभस्मता सर्वाऽपावनपावनता च सर्वगुणानां निर्गुणता चेति गुणा एव दिव्य सर्वमेवेति । 'कण्टक कण्टकेनैवे'तिवत् देहेन देहान्तराणि निर्विनाश्य तन्नाशकस्यापि त्यागमपि दर्शयति स्वाऽनाश्रितानां भ्रमायेति न तु भक्तानां तत्र भ्रमः । तथा च 'यो दिव्यः परमात्मा स एव दिव्यो मानवः परमात्मा' इति दिव्यस्य दिव्यमानवत्वमपि नित्यसच्चिदानन्दस्वरूपसदानन्दघनमूर्तित्वमत्र परत्र च सिद्धम् ।

**मानुष्ये दिव्यत्वे च श्रुतीति** । **यस्येति**—यस्य परब्रह्मपरमात्मनो यद् अणुपरिणामात्मको गुणः 'अणोरणीयानि'त्यनेन प्रोक्तः स च वामनस्वरूपोऽवतारो जातः, स एव च 'महतो महीयानि'ति महामहत्स्वरूप विश्वरूप दधार यद् बलिभूपेन दृष्टम्, तस्य परब्रह्मणो दिव्यस्य धृतदेवमानवस्वरूपस्य विशिष्टवामनस्योरुषु कट्यध ऊर्वोर्द्वयोरपि ह्रस्वोरुशब्दग्रहणेन बह्वर्थकस्योरुशब्दस्यात्र दीर्घप्रदेशपर्याप्तार्थपरायणस्य चतुर्दशसु लोकेषु पर्याप्तेष्वित्यर्थः, त्रिषु विक्रमणेषु कृतसक्रमणेषु निधृतपादन्यासेषु, भुवनानि सत्यलोकात् पातालान्तानि स्तराणि, विश्वाः विश्वसृष्टयः, यदा यदा वामनो भवति तदा तदेति व्याप्तिस्मारक विश्वा इति बहुवचनपदम्, ततो न पुनरुक्तार्थता, अधिक्षियन्ति अधिश्रयन्ति आश्रयन्ति निवसन्ति, अनेन मानवस्वरूपे वामने दिव्यता दर्शिता, मानवस्वरूपे घनश्यामे सर्वब्रह्माण्डदर्शन मानवस्वरूपे

**दिवि सूर्यसहस्रस्य भवेद् युगपदुत्थिताः । यदि भाः सदृशी सा स्याद् भासस्तस्य महात्मनः ॥ १ ॥ किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् । पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद् दोषाऽनलाऽर्कद्युति-मप्रमेयम् ॥ २ ॥ भागवतदशमे—तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शंखगदाद्युदायुधम् । श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्र-पयोदसौभगम् ॥१॥ महार्हवैदूर्यकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तलम् । उद्दामकाञ्च्यंगदकंकणादिभिर्विरोचमानं वसुदेव ऐक्षत ॥ २ ॥**

---

श्रीहरौ समाधिमता सर्वविश्वदर्शनं धामदर्शनं च भिन्नभिन्नधाम्ना दर्शनं च निजमूर्तौ कारितं श्रीस्वामिनारायणभगवताऽनेकाश्रितेभ्यो दिव्यदर्शनं कारितम् एतन्मानुष्ये दिव्यत्वम् । **विष्णुरिति** । विष्णुर्व्यापकः परमात्मा श्रीहरिर्वामनो ह्रस्वस्वरूपः सन् दिव्यमानवघनश्यामः सन्, इदं सर्वं विश्वं पुनर्व्यापकस्वरूपः सन् सर्वां सृष्टिं निजमूर्तौ समाधौ व्यदर्शयत् । **विचक्रमे**—व्याप्नोत्, श्रीहरिणा धर्मजेन श्रीगोपालानन्दमुनये मह्यं निजघनश्याममूर्तौ सर्वसृष्टिस्वरूपं दर्शितम्, टोडलापुरे बाल्यावस्थायां समाधिनाऽदृश्यकरणीविद्यया बालमण्डल-सहितस्य यज्ञोपवीतोत्सवे तत्र गतस्य घनश्याममूर्तावेतत्सृष्टिव्यष्टिसमष्टिदर्शनमभूदिति श्रुतिरे-षाऽत्राऽर्थे प्रमाणम् । **भगवद्गीतायामिति** । **सूर्येति** । दिवि स्वर्गे सूर्याणां यत्सहस्रं घट्टसूर्य-सहस्रं तस्यैकक्षणाऽवच्छेदेन युगपदुत्थिताः सघट्टतया घट्टीकृता या भाः कान्तिः सकान्ति-सूर्यस्तराः सहस्राधिसहस्रसूर्या यस्य महात्मनः परमात्मन एकरोमान्ते विद्यन्ते तादृशो द्योतमान उज्ज्वलः परमात्मा भगवान् अर्जुनदर्शनपथमुपगतः । मानवमेन श्रीहर्यवतारं श्रीकृष्णनारायणं दिव्यं सूक्ष्ममानववेषमपि विशालसर्वात्मस्वरूपदिव्यमहद्रूपं प्राह—**किरीटिनमिति** । मानवदिव्यमूर्तिं दिव्यकिरीटयुक्तम्, दिव्यगदाचक्रान्वितकरम्, स्वयं दिव्यतेजोघट्टमहाराशिमूर्तिं सर्वतः परितः स्वनिर्यातमहाघट्टधामात्मकतेजोमण्डलमण्डितम्, समन्तात्परितोऽनन्तदिक्षु व्याप्तं यद् दोषासु अनलानामग्नीनां तथा सर्वत्र सूर्याणाम् अनन्तानां या घट्टभासस्तत्तद्द्युतयः समूहिताः सुघट्टिताः पिण्डीकृताः, तन्मूर्तिकं तदानीं मेयमपि अतत्प्राप्यचक्षुषाम् अप्रमेयं दिव्यैर्दिव्यमेयम् अयोग्यचक्षुर्भिर्दुर्निरीक्ष्यं द्रष्टुमप्यपारं परमात्मानं श्रीहरिं सोऽर्जुन उत्तम-राजश्चापि तथाविधं श्रीहरिं ददर्शेति । **त्वां पश्यामीति** । मयारामभट्टोऽपि तथाविधं त्वां पश्यामीत्याह–मकरालये पत्तने । अत्र दिव्यमानवे दिव्यातिदिव्यत्वं वर्णितम् । **भागवत-दशमे** इति । **तमद्भुतमिति** । वसुदेवः, तम् अद्भुतं दिव्यं रमणीयं सर्वातिसुन्दरं सुखनिधिं विचित्रसृष्टिप्रविष्टाङ्गं बालकं मायिकबालकविलक्षणमाश्चर्यचमत्कृतिकरं कमलपत्रेक्षणं चतुर्बाहुं शङ्खचक्रगदापद्मधारिणं श्रीवत्साङ्कयुक्तलक्ष्मीसुशोभितहृदगस्थसुलम्बमानकौस्तुभमणिं पिशङ्गाम्बरधारिणं घट्टनवीनमेघसमरुचिरं महामूल्यवैदूर्यमण्यादिसन्नद्धकुण्डलसुप्रसरत्कान्त्या

**इति सञ्चिन्त्य भगवान् महाकारुणिको हरिः। दर्शयामास लोकं स्वं गोपानां तमसः परम् ॥३॥ सत्यं ज्ञानमनन्तं यद् ब्रह्मज्योतिः सनातनम्। यद्विपश्यन्ति मुनयो गुणापाये समाहिताः ॥ ४ ॥ नन्दादयस्तु तं दृष्ट्वा परमानन्दनिर्वृताः। कृष्णं च तत्र छन्दोभिः स्तूयमानं सुविस्मिताः ॥ ५ ॥**

---

समधिकौज्ज्वल्यद्योतित परितो लम्बमाना वक्रचिक्कणचञ्चत्कुन्तलाः केशा यस्य तम्, अत्यतिमूल्यस्वर्णरशनाभुजकटककंकणोर्मिकाद्यलकारसुकान्तिमन्तं मानुषदिव्यवेषं स्वबालक सर्वथा दिव्यवेषं सालकारसाकार समैक्षत। श्रीधर्मदेवो निजबाल घनश्यामं मुक्ताऽक्षरादिदिव्यसाकारस्वरूपेभ्योऽप्यतिदिव्यतम विलक्षण किशोर निजधामस्थ कमलदलदीर्घनयन चतुर्भुज विश्वतोबाहु द्विभुज शखचक्रगदापद्माद्युधसमन्वितम्। पौष्पगुच्छोर्मिकास्वर्णयष्टितुलसीमालानक्तकाऽभयदानादिसुपरिकरणम्, श्रीवत्सदक्षिणावर्तलक्ष्मीस्वर्णरेखासुकान्तकौस्तुभकुसुममालास्वर्णहाराद्यन्वितम्, पीताम्बरदिव्यस्वर्णसमसमुज्ज्वलाम्बरं घनश्यामसुन्दरम्, महामूल्यमहामणिनद्धस्वर्णमुकुटकान्तिभिः तथाविधकुण्डलप्रभाभिश्च परितः सुद्योतमानशिरःसहस्राधिकेशशोभितं स्वर्णकाचीभुजबन्धककणोर्मिकादिभिः सुरोचमानं श्रीहरि धर्मदेवो दिव्यपिता समैक्षतेति। साकारो दिव्य उपवर्णितो भगवान् इति ॥ २ ॥

**सञ्चिन्त्येति। महाकारुणिकः,** महती करुणा ह्ययोग्यजीवस्यापि निजब्रह्मलोकदर्शनदानकारिणी तद्वान् सर्वमायाजवनिकाहर्ता **हरिः** सर्वैश्वर्यसंभृतो भगवान् परमभगवान् परमात्मा गोपानां निजाश्रितानां निजाज्ञावर्तिना निजप्रकाशानन्दाशनवता निजमूर्तौ स्नेहेन प्रविष्टानामत्रत्यानामपि भक्तानां नरनारीसमस्तानामाबालवृद्धाना निजधाम्नोऽक्षरब्रह्मलोकस्य दर्शन दिव्यसाक्षात्कार सम्पादयामास, यद्धाम तमसः पर वर्तते, हरिर्धर्मजो घनश्याममहाराजो दिव्यमानववेषः स्वयमवतार्यक्षरधामाधिपतिस्तत्रस्थः सन्नत्रस्थोऽत्रस्थः सस्तत्रस्थ इत्यत्रत्येभ्यस्तद्धाम दर्शयामास तदिद मानवस्थितौ दिव्यैश्वर्य दिव्यत्वमिति। अथ तैत्ति० उ० आनन्द० अनु० १ प्राह **सत्यं ज्ञानमनन्तमिति**। श्रुत्यनुसार श्लोकमाह **सत्यं ज्ञानमनन्तं यदिति**। सत्यस्वरूपो भगवान्, ज्ञानाश्रयो नित्यसर्वज्ञो भगवान्, अन्तः परिच्छेदः कालादिकृतस्तद्रहितो व्यापकश्च भगवान्, यस्य ब्रह्माऽक्षरधामसंज्ञको ज्योतिःप्रकाशस्तथाविधप्रकाशवान् दिव्यो द्योतमानो भगवान्, सन् शाश्वतसत्ताकम् आयतन स्थान धाम यस्य स्वरूप च यस्य स सनातनः शाश्वतानन्दघनो भगवान्, एतादृश दिव्य परमात्मानमत्र मानवदिव्यवेषस्थमपि मुनयो दिव्यपुरुषा दिव्यदृष्टयो निर्विकल्पसमाधिसम्पन्ना मायावरणरहिताः साधवः समाहिता ध्यानपरायणा आत्मनि परमात्मयोगनिमग्नास्त्र्यवस्थासु त्रिदेहाऽपराभूतास्तुर्यस्थितिकाः सन्तो गुणानामावरणधर्माणा सर्वथा भगवत्कृपयाऽपायेऽपगमे सति विशेषेण यथावस्थितदिव्यस्वरूपेण स्थितं त पश्यन्ति साक्षात्कुर्वन्तीति 'सदा पश्यन्ति सूरयः, पश्यन्ति य योगिनः, समाधिमन्तः पश्यन्ति, यमेव एष वृणुते तेन लभ्यः, यदा पश्यः पश्यते

**भागवतैकादशे—मर्त्यो न यो गुरुसुतं यमलोकनीतं त्वां चाऽऽनयच्छ्-रणदः परमाऽस्त्रदग्धम् । जिग्येऽन्तकान्तकमपीशमसावनीशः किं स्वाऽवने स्वरनयन् मृगयुं सदेहम् ।। ६ ।।**

---

रूक्मवर्णम्, इत्यादिभिरपि सर्वत्र दिव्यमानवो भगवान् कृपया दर्शनविषयोऽभिहितः ।।४।। अथ मानवबालस्वरूपं श्रीकृष्णनारायण दिव्य पश्यता विस्मयमाह—**नन्दादय** इति । नन्दगोपादयः स्वसुत श्रीकृष्णनारायण तत्र स्वदिव्यदर्शनस्थले छन्दोभिर्मूर्तिमद्वेदादिभिः दिव्यस्तुतिभिः स्तूयमान दृष्ट्वा सुविस्मय गता परमानन्देन परमात्मसाक्षात्कारजन्येनाऽऽनन्देन चातिसभृता अत्युद्वेलानन्दफुव्वारनिरतिशयाऽऽप्लुता अभूवन्निति ।।५।। अथाऽऽनन्दात्ता साधव', आदिना हरिभक्ताश्च श्रीहरिकृष्ण घनश्याम दिव्यछन्दोभिर्मुक्तै' सस्तूयमान समाधौ वीक्ष्य सुविस्मिनाः परमस्य पुरुषोत्तमस्याऽऽनन्देन निभृताश्चाऽभूवन्निति । एतन्मानुष्ये दिव्यत्व श्रीहरेर्बोध्यम् ।

श्रीमद्भागवते एकादशे **मर्त्यं इति** । यः श्रीहरि· श्रीकृष्णावतारस्वरूपः सन् यमलोके नीत यो निजगुरोः सान्दीपनिविप्रस्य सुतस्तम आनयत् गुरव आर्पयच्च, स भगवान् न मर्त्यः, किन्तु दिव्योऽपि मर्त्य इति स एव शरणदो भगवान् अश्वत्थामब्रह्मास्त्रदग्ध गर्भस्थ त्वां परीक्षित ररक्षापि, स एव भगवान् दिव्यमानवो निजाऽवनेऽनीशः किम्? एतादृश सन् ईशमीश्वरं समर्थमन्तकस्याऽप्यन्तक भीष्मं ब्रह्मचारिणं जिग्ये । अथ निजघातकं मृगयु सदेह स्वः स्वर्गम् अनयत्, एवविधदिव्यमानवचरित्रो भगवानिति । अथ धर्मजः श्रीहरिः स्वावतारे श्रीकृष्णनारायणे एतादृश दिव्य महैश्वर्य समदर्शयत्, तथैव स्वयं धर्मजो घनश्यामः सन्नपि दिव्यमानवो भगवान् गोपालदासनामानं गुरुसुतवच्छ्रेष्ठ मतं साधुम् आभिचारिककृतपराभवेन मृतमिव जात ररक्ष, परमास्त्रसम राजप्रदत्तदान लब्ध्वा दग्धमिव कृष्णवर्ण विप्र तैलगं शरणदः सन् गौर चकार संररक्ष, अन्तकादीनामप्यन्तकसम कामदेव मानवोऽपि दिव्यो हरिर्जिग्ये, मृगयुसमान कालीदत्त चाऽन्याऽसुराश्चापि स भगवान् देह त्याजयित्वा स्वरनयत् परलोकं प्रापितवानिति ।। ६ ।। अवतारश्लोकोऽयमवतारिणः परमात्मनश्चरित्राणा स्मारक इति न साक्षाद् यावदर्थानुयोजने विनियोगः । अथ दिव्यमानवस्वरूपस्य परमात्मनो मानव-मर्यादाधीनलीलावत्त्वे सत्यपि तदिच्छाया' प्राकाम्यवशित्वेशित्वसत्यसंकल्पत्वसत्यकामत्वसर्वान-वच्छिन्नाऽप्रतिहतगतिकत्वात् दिव्यचमत्कारप्रदर्शित्वयोगावसरसमनुयोगयोजकत्वात् दिव्यस्वरूप-वर्तनवर्तित्वमिति न मानवाभिभवताशकाऽपीति तात्पर्यार्थ. । परमेश्वरस्य परमात्मनोऽवतारा गुणैश्वर्यवेषाभूषाऽम्बरहेत्यादयश्चेतना ये ये प्रेर्यन्ते श्रीहरिणा ते ते श्रीहर्यन्तर्नियमिता एवेति तत्तदवतारद्वारा यद्वर्णन दिव्य मानववेषं वा तत्सर्वमप्यन्तत. परमात्मन्येव सम्प्रत्ययस्यतीति अवतारस्य दिव्यत्व मानुषदिव्यवेषत्वमपि शरीरिणि परमात्मन्यनुसन्धेयमिति श्रीघनश्याम-महाराजस्याऽनादिनित्यसिद्धदिव्याकृतेर्दिव्यस्य मानुषवेषस्य दिव्यचमत्कारैर्दिव्यत्व सिद्ध्यत्येवेति ।

**'साक्षी चेता केवलो निर्गुणश्च ॥ १ ॥ य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्प' इति भगवत्यष्ट महागुणाः ॥छान्दोग्ये 'यः कालकालो गुणी सर्वविद्यः' ॥२॥ विष्णुपुराणे– 'सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः। स शुद्धः सर्वशुद्धेभ्यः पुमानाद्यः प्रसीदतु' इति स्मृतेः ॥३॥ स्कान्दे–'भुवि धृताकृतेर्जन्ममंगलं चरितमद्भुतं लोकपावनम् । भवति निर्गुणं सर्वमेव ते भवति निर्गुणं ब्रह्म यत्परम् ॥१॥ तव समाश्रयात् तामसा जना अपि च राजसाः सात्त्विकाश्च ये। ननु भवन्ति ते निर्गुणास्ततो वयमुपास्महे त्वां हि निर्गुणम्' ॥ २ ॥**

---

शरीरित इति, निर्गुणत्व सौक्ष्म्यत्वेन मायिकगुणकार्यादिरहितत्वेनाऽविशेषणत्वेन विशिष्टत्वेन च दिव्यगुणसंभृतत्वमपीति तत् ॥ १ ॥ **योऽपहतपाप्मेति** । यः परमात्मा, पाप्मा मायाशस्तद्रहितः स्वरूपे शुद्धः, जराभावः शैथिल्य तद्रहितः, शरीरवियोगो मरण तद्रहितः, शोक आन्तराग्निस्तद्रहितः, क्षुधातृषारहितः, सत्येच्छुकः ऋतफलश्चेति महागुणवान् दिव्यो मानवोऽपि दिव्यमानवोऽय घनश्याममहाराजः। **छान्दोग्ये–य इति** । यः श्रीघनश्याममहाराजः, कालस्य कलनस्वभाववन्निजसकल्पात्मकसुमूर्तपुरुषस्य कलनसञ्चलनसकलनकर्ता नियामकः, दिव्यगुणी सर्वज्ञश्च यो दिव्यो मानवो दिव्यश्चेति ॥२॥ **विष्णुपुराणे सत्त्वादय** इति। ईशे दिव्ये स्वरूपे परमात्मनि तस्मिन्नेव च मानवे स्वरूपे मानवदिव्ये च, प्राकृता मायागुणा न सन्ति, सोऽयमय स घनश्यामः शुद्धः, सर्वशुद्धेभ्यो मुक्ताऽक्षरब्रह्मैश्वर्यादिमूर्तिमत्पुरुषेभ्यः शुद्धः परमपुमान् सर्वाद्य आद्यानामप्याद्यः पूर्वेषामपि पूर्वः सनातनः परमात्माऽयमिति, सः प्रसीदतु सदा मुक्त्यर्थं प्रसन्नोऽस्तु । **स्कान्दे** इति । **भुवीति** । अस्या भारतभूमौ धृतदिव्याकृतेस्तव श्रीधर्मजन्मन. श्रीहरेर्जन्माऽऽविर्भावो घनश्यामात्मकः श्रीकृष्णात्मकश्च मगलस्वरूपः सर्वेषाम्, तव चरितमपि बालचरित युवादिचरित चाऽद्भुतमतर्क्यम्, बाल्येऽपि युवत्व युवत्वेऽप्यस्खलितत्व स्वल्पत्वेऽपि बहुत्व परिच्छिन्नेऽप्यपरच्छिन्नत्व दैशिकत्वेऽप्यदैशिकत्व कालीनत्वेऽप्यकालीनत्वमित्याद्यद्भुतम् एकस्मिन्नाहार्यत्वेन तर्कतनुविशीर्णकमेवमेवाऽद्भुतम्, लोकाना ब्रह्माण्डाना जीवेश्वरादीना च पावन पवित्रताकारकम्, सर्वमेव समग्र चरित्र लौकिकमलौकिक च वा मायिकगुणपरिवर्तनेन निर्गुण दिव्यमेव, यतः पर ब्रह्म दिव्य दिव्यमानवस्वरूप श्रीकृष्णाख्य घनश्यामाख्य च दिव्य दिव्यगुण निर्गुण कर्मफलप्रदगुणताभिन्नत्वम्, **तव** परमात्मनः दिव्यस्य मानवाभिन्नस्य दिव्याभिन्नमानवस्य दिव्याभिन्नमानवाभिन्नदिव्यस्य शरणाश्रयात्, अयोग्या अपि तामसास्तामसकर्माणो राजसकर्माणः पुण्याः पापाश्च जना अपि सात्त्विका भूत्वा सात्त्विकाश्च तव कृपया सगुणा अपि निर्गुणा दिव्यगुणाः सम्पद्यन्ते । तेन

**दशमे 'नृणां निःश्रेयसार्थाय व्यक्ति ( मूर्ति ) भगवतो नृप। अव्ययस्याऽप्रमेयस्य निर्गुणस्य गुणात्मनः ॥ ३ ॥ एकादशे–'मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् । सुहृदं प्रियमात्मानं साम्याऽसंगादयोऽगुणाः ॥' इत्यत्राऽगुणाः गुणपरिणामरूपा न भवन्ति किन्तु नित्या इति श्रीधरस्वामिभिर्व्याख्यातम् । 'वनं तु सात्त्विको वासो ग्रामो राजस उच्यते । तामसं**

---

हेतुना निर्गुणत्वप्रातीच्छया निर्गुण दिव्यगुण सर्वगुण त्वां दिव्यमानवदिव्य भवन्त भगवन्तमुपास्महे देवादयो वयमिति ॥ २ ॥

**भागवते दशमे नृणामिति** । हे नृप परीक्षित् !, भगवतः परमात्मनो दिव्यस्य श्रीहरेः, व्ययः–अवयवह्रासजन्याऽवयविह्रासस्तद्रहितस्य, मातु योग्यो ज्ञानेन गतु क्षमः परिग्राह्यो न मेयोऽमेयस्तस्य स्वभावगुणधर्मलीलास्वरूपादयो यस्य ज्ञानातिक्रान्तास्तादृशस्याऽपारावेदनस्य भगवतः मायागुणरहितस्य दिव्यगुणार्णवस्य, गुणा यत्राऽऽत्मनि विद्यन्ते दिव्यास्तथाविधस्य श्रीहरेर्दिव्यस्याऽत्राऽदृश्यस्याऽव्यक्तस्य व्यक्तिराविर्भावो मानवदिव्यवेषाविष्कारो घनश्याममूर्तिस्वरूपाकारसुवेषस्तु, अत्र नृणा देहिनामसख्याना निःश्रेयस सहवासादिना यन्नैर्गुण्य ततो दिव्यत्व ततो धामगामित्व ततो दिव्यमुक्तचैतन्यघनज्ञानघनसाकारसुमूर्तत्व तदर्थमिति, ततो दिव्याऽभिन्नमानवाऽभिन्नदिव्योऽय श्रीहरिरिति ॥ ३ ॥

**एकादशे मां भजन्तीति** साम्य सर्वचेतनान् प्रति तत्तद्गुणस्वभावानुसारफलव्याप्तिमत्तया विहारशीलता असगित्वम्—तत्र तत्र शरीरसृष्टौ लीलैक्यमिवाऽऽचरतोऽपि तल्लेपः सगो विस्मयश्चोभयात्मकः तद्रहितशीलता, आदिना सौशील्यवात्सल्यकारुण्यौज्ज्वल्यसार्वज्ञ्यगाम्भीर्यौदार्यसौन्दर्यरामणीयत्वसौगन्ध्यसौरस्या ऽऽ स्वाद्याकर्षणानन्दवीर्यबलशक्तितेजःप्रभृत्यसख्या गुणा, दिव्या गुणाः सर्वे यावन्तो गुणत्वेन गुणाः ते सर्वे मा घनश्याम किशोरदिव्यमूर्ति मायागुणरहित पराधीनतात्मकाऽपेक्षारहित सर्वान्तर्यामिणमात्मात्मान प्रिय प्रेमास्पद यथावत्फलप्रदानकरमपक्षपातिमित्रं मा श्रीहरि चेतनानन्दघनमूर्ति मा मम गुणाश्चेतनाश्चेतनमुक्ताश्चेतनाऽवताराश्चेतनाः साकाराः सर्वे मदाश्रिता अपि मित्रविश्वस्ताः सन्तोऽधिकरण मा समाश्रित्य भजन्ति, सेवन्ते, यथासमयमाज्ञा वहन्त्यपि चेति यथाऽह सुमूर्तस्तथा दिव्या मे गुणाः सुमूर्ताश्चेतना अवतारा अपि मा भजन्ते **गुणपरिणामरूपा** इति मायागुणजा गुणा न, परिणामशीला अपि न नित्यत्वात्, दिव्यत्वात्, नित्यमूर्त्याश्रयशाश्वतस्वरूपत्वाच्चेति श्रीधरस्वाम्यभिप्रायः । अथ दिव्यमानवभगवतो निवासस्थान निकेत दृश्यमान पार्थिवमिवाऽपि तन्मायागुणमय न किन्तु मत्प्रसगेन दिव्याक्षरधामैव दिव्यम्, देहोऽपि पार्थिवो दृश्यमानो न तथा किन्तु दिव्योऽहमानन्दघन इति तत उक्त **मन्निकेतं तु निर्गुणम्**, मम निकेतो मूर्तिर्गृह चान्यदासनवेषादि सर्वमपि दिव्यमिति दिव्यगुणमिति मानववेषोऽह

**द्यूतसदनं मन्निकेतं तु निर्गुणम्' ॥ ४ ॥ विष्णुपुराणे 'सगुणो निर्गुणो विष्णुर्ज्ञानगम्यो ह्यसौ स्मृतः । नहि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि । वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः ॥ ५ ॥ स सर्वभूतः प्रकृतेर्विकारान् गुणादिदोषांश्च मुने व्यतीतः' इत्यादिपाराशरोक्तेः हरेरनादिनित्यसिद्धा दिव्या गुणाः प्रोक्ता वायुपुराणे—'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तदृष्टिः । अनन्तशक्तिश्च विभोर्विभुज्ञाः षडाहुरंगानि महेश्वरस्य' ॥६॥**

---

दिव्योऽनादिश्रीकृष्णनारायणपरमात्मेति यच्च जीवात्मना द्यूत जन्ममरणपणस्तस्य सदन स्थान कोशरूप मायिकादि शरीर तत्तु **तामसं** तमोमय मायामयम्, यश्च वासो बहिरिन्द्रियग्रामेण सह स तु राजसो रागकारकः स्निग्धवासनाजनको जन्ममरणप्रद इति यश्च वासो निजे सत्त्वमये सच्चिदानन्दारण्ये वने रक्षणे मोक्षाध्वनि स तु सात्त्विकः सत्त्व यद् ब्रह्मदर्शन तदात्मक इति सोऽय कल्याणकरोऽपि दिव्यो वासो नैर्गुण्यानुसरणपरो वोव्यस्ततोऽह मानववेषोऽपि घनश्यामस्वरूपो दिव्योऽस्मीति दिव्यमानवदिव्योऽस्मीति ॥ ४ ॥

**विष्णुपुराणे सगुण इति** । विष्णु. व्यापकोऽन्तर्यामिधामस्थदिव्यमूर्तिर्निर्गुणो मायागुणरहितो दिव्यसर्वसद्गुणसहिता भगवान् परमात्मा घनश्यामात्मा चक्षुर्भ्या ग्राह्योऽपि विशेपतस्तु सर्वथा ज्ञानगम्यो बोधवेद्य इति समहिमयथावद् दिव्यमानवदिव्यो बोध्य' । तस्य दिव्यस्याऽवतारात्मना विहरतश्च तदा तदानीम्प्रयुक्ता गुणा असख्याः सर्वे तु गुणा यावत्त्वेन सामान्यतो व्यक्तित्वेन विशेषतश्च वक्तु सख्यातु सर्वैरपि मुनिगणैर्गणितकारैर्भक्तैर्महिमविद्भिश्च मुक्तैः समाधिमद्भिः सश्रद्धैः स्तावकैर्व्यासाद्यैः शेषशारदनारदादिभिः सूतादिभिश्च न शक्याः, यद्यपि मायिका अपि व्यष्टिगुणाः सख्यातुं न शक्यन्ते तर्हि तस्य सत्त्वरजस्तमोभिर्वियुक्तस्य मायापराभवरहितस्य परमात्मनो मायागुणेभ्योऽनन्तगुणितगुणपारः कथमवगन्तु शक्येतेति ॥५॥ दिव्यगुणानामपारत्वेन मानववेपगुणानामपि तेषामेवाऽपारत्व तेपा दिव्यगुणत्वादेवेति त्रिक चात्राऽऽवेद्यते गुणव्याजेनेति ॥ ५ ॥

**सः सर्वभूत** इति । पराशरर्षिः प्राह—स घनश्यामो भगवान् दिव्यकिशोरोऽत्र मानववेपकिशोरोऽपि सर्वात्मकोऽन्तर्यामी सूक्ष्मातिसूक्ष्मः सर्वभूतः सन् प्राकृतप्रविष्टोऽपि प्राकृतविकारैर्मायागुणादिक्रोधकामादिदोषैश्च कर्मभिश्चाऽपराभूतो तेभ्यो व्यतीतस्तान् प्रतिव्यतिरेकितया वर्तमानो निर्लेपो दिव्यमानवोऽय घनश्यामो दिव्यमानवदिव्यपुरुषोत्तमः । अनेन प्रकृतिपारस्थः प्रकृतिस्थश्च पुनस्तदानीमेव प्रकृतिपारस्थो धामस्थ इति । दिव्यता दर्शिता **हरेरिति** । श्रीहरेः श्रीहरिकृष्णस्य भगवतोऽनादिनित्यसिद्धा ध्वसप्रागभावाऽप्रतियोगिनः शाश्वता द्योतमाना एकरसात्मका गुणाः षडैश्वर्यात्मकाः प्रोक्ता वायुपुराणे—**सर्वज्ञतेति** । सर्व व्यष्टिसमष्टिकार्यकारणस्थूलसूक्ष्मजडचेतनसमस्त सामान्यतया विशेषतयाऽपि च जानाति यस्तस्य भावः सर्वज्ञता नित्य-

**तेजोबलैश्वर्यमहाऽवबोधस्ववीर्यशक्त्यादिगुणैकराशिः । इति विष्णुपुराणे प्रकृतेः कार्यभिन्नास्ते गुणाः प्रोक्ताः । भागवतप्रथमे—सत्यं शौचं दया क्षान्तिस्त्यागः सन्तोष आर्जवम् । शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम् ॥७॥ ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो बलं स्मृतिः । स्वातन्त्र्यं कौशलं कान्तिर्धैर्यं मार्दवमेव च ॥८॥ प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः ।**

---

प्रत्यक्षम्, नित्या तृप्तिरनुद्भवेच्छाविषयविषया तृप्तिः, शाश्वती तृप्तिस्तर्पणसुखाऽलम्बुद्धिः, अनादिः प्रागभावाप्रतियोगो यो बोधोऽभिधाशक्यार्थसार्वज्ञ्यम्, सर्वशब्दब्रह्मार्थयोजकताज्ञप्तिमत्ता, स्वस्य स्वेन तन्त्र्यते चाल्यते सर्वात्मकः स्वः इति स्वतन्त्रः तस्य भावः, अलुप्ताऽक्षुण्णा संस्काररलयाऽनधीना स्वरूपाशल्याऽनधीना चिच्छाश्वतता प्रकाशशाश्वतता चिद्दर्पणशाश्वतता यत्र सर्वं सर्वदा भासते, एषा दृष्टिः स्वं चिदेव, सर्वज्ञतेत्यत्र तु धर्मभूत ज्ञानमिति न पौनरुक्त्यम्, अनन्ताः शक्तयो यावतां तत्त्वानामनुयोगवियोगादिव्यवस्थाशालिन्यस्तद्वत्ता, एते षड्गुणा गुणत्वेन गुणा अत एव षडप्यवान्तरा असंख्या गुणाः सन्तिः, कस्मात् ? विभोरिति बलात्, विभुत्वात्, विभोर्गुणानामपि स्वरूपसंख्यादिभिर्विभुत्वात्, महेश्वरत्वादैश्वर्याणामप्यानन्त्यात् विभुत्वज्ञा असंख्यगुणैश्वर्याऽङ्गान्याहुरिति । तथा च दिव्यत्वे दिव्यमानवत्वे मानवदिव्यत्वे तानि तान्येव तथाविधानि शाश्वतानि सन्ति भगवति उभयो शाश्वतत्वादिति ॥ ६ ॥ **तेज** इति । तेजः अपराभवशालित्वम्, बलम्—अप्रधृष्यत्वादि, ऐश्वर्यम्—नियमनशीलत्वादि, महावबोधो नित्यप्रत्यक्षसार्वज्ञ्यादि, वीर्यम्—अशैथिल्यादि, शक्तिः विधारणाकर्षणाद्या, गुणा दयास्नेहवात्सल्यौदार्यगाम्भीर्यशरण्यादयः, तेषामेकाधारः एकाश्रयः, गुणगुण्यभेदेन स्वेकराशिरिति प्रयोगः, विशिष्टस्य मुख्यत्वात् विष्णुपुराणे एते गुणाः परमात्मन एव न तु प्रकृतेस्तत्कार्याणां वा, प्रकृतेः कार्यात्मका गुणा अपि जड तेजो जले बल प्रवाहणात्मकम्, मेघे सूर्यमण्डले वा कल्पितमैश्वर्यं दाहात्मकम्, विद्युति अप्रतिहतात्मक बल ध्रुवे वीर्यं सूर्यकान्ते दाहशक्तिरित्यादयः समाननामानो भवन्त्यपि न ते यथार्थाः, किन्तूपचारमात्रेण व्यवहार्याः, प्रवृत्तिनिमित्तार्थैकपरायणत्व तु चेतनगुणानामेव तेषामिति । एतज्ज्ञापनार्थं प्रकृतेः कार्यात्मकगुणेभ्य एते चेतनगुणा भिन्ना इति एते गुणा दिव्या दिव्यवृत्तयश्च ततो भगवतो दिव्यत्व दिव्यमानवत्व मानवदिव्यत्व च शाश्वतदिव्यगुणवत्त्वात् । अथ **भागवतप्रथमे 'सत्यमिति'** सत्य यथार्थ हितकर वर्तनम्, शौच नैर्मल्यम्, दया करुणा, शान्तिः सहनशीलम्, त्यागः अपवर्जनम्, सन्तोषः अलंभावः, आर्जव सारल्यम्, शमः शान्तिः, दमः निग्रहः, तपः कृच्छ्रम्, साम्यं समानभावः, तितिक्षा अप्रतिकारः, उपरतिः विरामः, श्रुत शास्त्रादिज्ञानम्, ज्ञान विवेकः, विरक्तिः रागाभावः, ऐश्वर्यम् ईशनशीलता, शौर्यम्-अपश्चपादता, तेजः पराभावकता, बलम् अप्रधृष्यता, स्मृतिः सदा स्फुरणा, स्वातन्त्र्य यथेष्टस्थितिः, कौशल—चातुर्यम्, कान्तिः

**गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहंकृतिः ॥ ९ ॥ एते चाऽन्ये च भगवन्नित्या यत्र महागुणाः । प्रार्थ्या महत्त्वमिच्छद्भिर्न वियन्ति स्म कर्हिचित् ॥ १० ॥ गुणात्मनस्तेऽपि गुणान् विमातुं क्षमाः क्वचित् । ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥ इति विष्णुपुराणे ॥ ११ ॥ मार्कण्डेयपुराणे-**

---

औज्ज्वल्यम्, धैर्यम् अक्षोभः, मार्दवम् आर्द्रीभावः, प्रागल्भ्यम् अगाधविशालता, प्रश्रयः आधारदानम्, शीलम्—नियमितव्रतम्, सहः साहजिकमार्दवम्, ओजः प्रभावः, बलम्—अपराभाव्यता, भग सामर्थ्यम्, गाम्भीर्यम्—विचाराऽगाधता, स्थैर्यम् एकस्थितिः, आस्तिक्यं सद्बुद्धिः, कीर्तिः प्रशंसा, मानः-स्वरूपरक्षणम्, अनहङ्कृतिः अहङ्कारवर्जितता, अन्ये च महागुणा वात्सल्य कर्तुमकर्तुमन्यथाकर्तुमिच्छा, प्रसन्नता, शरण्यता, ब्रह्मण्यता, पतितपावनता, कर्तृत्वम्, दातृत्वं भक्तभक्तत्वमित्यादयो महागुणाः, महामहासत्पुरुषैर्महत्त्व गौरव महामुक्तत्वमिच्छद्भिश्च प्रार्थ्या एष्टव्या गुणा **यत्र** परब्रह्मणि श्रीघनश्यामे नित्या वर्तन्ते, कर्हिचिदपि न वियन्ति न नश्यन्ति न विलीयन्ते चेति तादृशो दिव्यगुणो दिव्यो घनश्याममहाराजो मानवदिव्यवेषोऽलौकिकदिव्यमूर्तिर्दिव्यालौकिकलौकिकदिव्यगुणो वर्तते इति शाश्वत दिव्यगुणवत्स्वरूपसत् साकारोऽत्र विशेषतया गुणमुखेन गुणी प्रतिपादित. ॥ १० ॥ अथ विष्णुपुराणे **गुणात्मनस्तेऽपीति** । तव श्रीपुरुषोत्तमस्य, हेया ये क्रोधादयो दुर्गुणास्तान् विना ये ये दिव्या भगशब्दवाच्या गुणा ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि तदन्यान्यपि च अशेषगुणव्रजानि तानि ते च गुणा असख्या अपराश्च गुणा गुणात्मनस्तव मूर्तौ विमातुमपि न क्षमा उद्वेला उर्वरिताः सख्यातिक्रान्ता गुणा दिव्या वर्तन्ते, ततो दिव्यगुणवान् दिव्यो भगवान् तद्दिव्यगुणवान् दिव्यमानवो भगवान् तद्दिव्यगुणवान् दिव्यमानवदिव्यप्रभुर्भगवान् इत्येव दिव्यमानवदिव्यत्व प्रतिपादितम् । एतत्तात्पर्य चेतनेषु जडेषु च शरीरेषु ये ये गुणाः साक्षादन्वितास्ते ते गुणाः शरीरिणा श्रीहरिणा तत्र तत्र प्राविर्भाविताः, ते गुणाश्च स्वाश्रयाश्रयत्वेन शरीरिणि चाऽप्यन्विता इति सर्वे गुणाः परमात्मन एव । ते च जडेषु चेतनेषु शरीरिणि च व्यस्तास्तत्र तत्र मातु क्षमा अपि तु सर्वेऽप्येकत्राऽधिकरणे निर्मातुमक्षमा. समस्तास्ते केवलचेतनवर्गे केवलजडवर्गे यथा उर्वरिता भवन्ति तथा श्रीहरौ परमात्मन्येकस्मिन् शरीरिणि तन्मात्रेऽपि मातुमक्षमा उर्वरिता जायन्त इति गुणमहित्व वर्ण्यते येन गुणिमहित्व गुणिदिव्यत्व गुणिमानववेषदिव्यत्वं च प्रतिपादितम् । ज्ञान नित्यप्रत्यक्षदर्शित्वात्मकसार्वज्ञ्यम्, शक्तिरक्षरब्रह्ममुक्तादिसर्वविधारणाद्या, बलम्—अप्रधृष्यत्वादिलक्षणम्, ऐश्वर्यम्—नियामकान्तर्यामित्वादिसामर्थ्यम्, वीर्यम्—अशिथिलत्वादिदिव्यकायसम्पत् दार्ढ्यानुयोगिस्वरूपा, तेजः अपराभवशीलनापूर्वकप्रभावितता, एवमन्येऽप्युक्ताः सत्यादयोऽसख्या दिव्याः, गुणा दिव्यमानुषगुणवत्त्व साकारपरब्रह्मपरमात्मश्रीहरिदिव्यगुणित्व चेति वर्णितं प्रतिपादित भवतीति ।

**स देवो भगवान् सर्वं व्याप्य नारायणो विभुः। चतुर्धा संस्थितो ब्रह्मन् सगुणो निर्गुणस्तथा। एका मूर्तिः ॥ १२ ॥ दूरस्था चान्तिकस्था च विज्ञेया सा गुणातिगा। वासुदेवाऽभिधानाऽसौ निर्ममत्वेन दृश्यते ॥ १३ ॥ द्वितीया पृथिवीं मूर्ध्ना शेषाख्या धारयत्यधः। संकर्षणेति विज्ञेया बलमुत्तममास्थिता। तामसी सा समाख्याता तिर्यक्त्वं समुपाश्रिता ॥ १४ ॥ तृतोया कर्म कुरुते प्रजापालनतत्परा। सत्त्वोद्रिक्ता तु सा ज्ञेया धर्मसंस्थानकारिणी ॥ १५ ॥ चतुर्थी जलमध्यस्था शेते पन्नगतल्पगा। अनिरुद्धेति सा ज्ञेया जगदुत्पत्तिकारिणी ॥ १६ ॥**

---

अथ मार्कण्डेयपुराणे भगवान् दिव्यः सगुणो निर्गुणश्च दिव्यसाकारो व्यापकोऽन्तर्यामी चेश्वरात्मस्वरूपश्च वर्णितो दिव्य इति। तदाह-**स देवो भगवानिति।** दिव्यो द्योतमानोऽनादिश्रीकृष्णनारायणोऽक्षरधाम्नि स्थितः स एव विभुर्व्यापकोऽन्तर्यामिश्रीहरिः सर्वत्र सर्वं व्याप्य शरीरी स्थितः, स एव च परमात्मा परवासुदेव एका एव मूर्तिः साकारः सर्वोपरि श्रीस्वामिनारायणपरमात्मा, स दिव्यसर्वगुणसम्पन्नः सगुणः स एव च मायिकगुणरहितो निर्गुण इति। अथ पारिभाषिकः सगुणः सुधासिन्धुतरंगोक्तो विश्वरूपदर्शनप्रदो निर्गुणश्च मानववेषदर्शनप्रद इति वामनवत् वासुदेववत् धार्मिकवच्च। सा मूर्तिरत्रस्थाऽपि घनश्यामाऽन्तिकस्थाऽपि दूरस्थाऽक्षरधामस्था दूरस्था सा मायिकगुणेभ्योऽतिक्रान्ता विज्ञेया, सा परवासुदेवाभिधाना व्यूहात्मिकाऽपरवासुदेवेऽन्तःप्रविष्टाऽपरवासुदेवाभिधाना भवति, सा ईश्वराग्र्या निर्गुणा निर्ममत्वाद्यभिशोभिता मायाशबर्जिताऽपि प्रोक्ता, अपरवासुदेवस्य दिव्यविभूतितनुत्वे प्रतितन्येऽभिहिते तन्मूर्तिर्मायागुणवर्जिता निर्गुणा निर्ममा विभूतिगुणयुक्ता चापीति घटते। एषा परब्रह्मपुरुषोत्तमस्य सर्वशरीरिणो महैश्वर्यं सर्वैश्वर्याग्र्य वासुदेवस्वरूपम् अपरवासुदेवस्वरूप सम्पद्यमान दिव्यमेतन्निर्गुणमपि सर्वदिव्यगुणाभियुक्त चेतनद्रव्यात्मकस्वरूपसद्दिव्यैश्वर्यघनात्मकसाकारस्वरूपममृतधामविराजितकिशोरदिव्यस्वरूप समष्टिकारणात्मक परब्रह्मेच्छया ईश्वरजीवसृष्टिनिदानभूताऽऽविर्भावसमभावतिरोभावात्मकनान्तरीयकैश्वर्यस्वरूपसत्सुमूर्तप्राकट्यपर तदन्वयभावान्वितमादायोक्त-**चतुर्धेति।** अपरवासुदेवनारायणो मूलम्, अनिरुद्ध उत्पत्त्यैश्वर्यम्, प्रद्युम्नः स्थित्यैश्वर्यम्, सकर्षण सहार्यैश्वर्यम्, चेतनात्रय ईश्वरा ऐश्वर्यघनाः सगुणा एते दिव्यव्यवहारगुणा दिव्यसद्गुणाश्च सृष्ट्यर्थाऽवतारा एते। एते नित्या नित्यैश्वर्याणि, सूक्ष्मा अपि स्थूलावस्था उत्पत्तिस्थितिलयकार्यान्विता व्यवह्रियन्ते चतुर्धा इति। अपरवासुदेवो दिव्यगुणो निर्गुणः, त्रयस्तु सगुणाः दिव्याऽदिव्यगुणा इति। अथ चतुर्धाऽन्यप्रकारेण श्रीकृष्णनारायणः परब्रह्मतेज ऐश्वर्यम्, श्रीवासुदेवनारायणः परब्रह्मैश्वर्यगुणः, श्रीलक्ष्मीनारायणः परब्रह्मशक्तिवीर्यैश्वर्यम्, श्रीनरनारायणः परब्रह्मब्रह्मचर्यशीलगुणः, एते चत्वारो

**'व्यूहात्मानं चतुर्धा च वासुदेवादिमूर्तिभिः। सृष्ट्यादीन् प्रकरोत्येष विश्रुतात्मा जनार्दन' इति व्यासवचनम् ॥१७॥ प्रथमे-सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुषः एक इहाऽस्य धत्ते। स्थित्यादये हरिविरञ्चिहरेतिसंज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ॥ १८ ॥ अथ सदा नित्यसिद्धदिव्यविग्रहत्वात् साकारत्वं हरेश्च प्रकृतिजन्याकृतिनिर्गतत्वात् कैवल्यार्थ्यदृश्यत्वाच्च निराकारत्वं वदन्ति सूत्रश्रुतिस्मृतयः।**

---

निर्गुणा निर्लेपाः परब्रह्मवत्स्थितिकाः, ततो वासुदेवात्प्राविर्भूतास्त्रयोऽनिरुद्धप्रद्युम्नसकर्पणास्त्रिगुणानुकूलसर्जनपोपणसहरणाधिष्ठात्रीश्वराः सगुणा एव वैराजोत्पन्ना ब्रह्मविष्णुमहेशास्त्रिगुणानुकूलोत्पत्तिस्थितिलयाधिष्ठातृदेवेशाः सगुणा इति ते षट् सगुणमूर्तय इति वासुदेवादयश्चत्वारः, कारणकार्यात्मका व्यूहसज्ञाः, वैराजादयश्चत्वारः कारणकार्यात्मका व्यूहसज्ञकाः, सगुणाना पण्णा व्यूहः, निर्गुणाना चतुर्णाम् अव्यूह इति। **एका** मूर्तिर्वासुदेवात्मिका, **चतुर्धा** मूर्तयो वासुदेवानिरुद्धप्रद्युम्नसकर्पणाः, तत्र **द्वितीयेति**। सकर्पणा शेपस्वरूपा मूर्तिः सहारिणी, तामसक्रियाव्यापारवती तिर्यक्स्वरूपा जलशायिनी यथागुणकर्मानुरूपा मूर्तिः, ईश्वरोऽय सकर्पणः, स एव पतञ्जलिः, स एव लक्ष्मणो रामानुजः, स एव बलदेवो रामप्रतापःशिवश्चेति। **तृतीयेति**। सत्त्वप्रकर्षा धर्मप्रकर्षा च प्रद्युम्नस्वरूपा कामस्वरूपा इच्छारामस्वरूपा पालनपरा विष्णुस्वरूपेति। **चतुर्थीति**। कमलस्था जलमध्यस्था नागशय्यास्था जगज्जन्मप्रदाऽनिरुद्धस्वरूपा वेधःस्वरूपा सत्यस्थाऽपि चेति ॥ १६ ॥ **व्यूहात्मानमिति**। वासुदेवानिरुद्धप्रद्युम्नसकर्षणेति चतुर्धा जनार्दनो नित्यप्रत्यक्षदर्शी भगवान् अपरवासुदेवोऽनिरुद्धादिद्वारा जगत्सृष्ट्यादीन् करोतीति। साक्षात्कार्यकर्तृत्व सगुणत्व कार्यनिर्वाहकत्व निर्गुणत्व चेति पारिभाषिक व्याख्यानम्। निर्गुणस्य दिव्यस्य परमात्मनः शरीरेषु प्रविष्टस्य साक्षात्कार्यकर्तृत्वेन सगुणत्वमाह-**प्रथमे** स्कन्धे-**सत्त्वमित्यादि**। प्रकृतेर्मायाया गुणाः सत्त्वरजस्तमासि, तैर्युक्तः, अयुक्तोऽपि कैश्चिदीश्वरात्मकशरीरैस्तत्तद्गुणानुसंपृक्तैरन्तर्याम्यय परमात्माऽपि परमपुरुषो वैराजात्मकप्रपौत्रद्वारा परम्परया सगुण इत्युपचारविषयो न तु तद्यथार्थव्यवहारविषय इति। तथापि अन्ततस्तत्रैव सर्वसमन्वयात् स विशिष्टः कारणात्मको भगवान् जगतः स्थितिलयोत्पत्त्यर्थं हरिहरविरञ्चिसज्ञा धत्ते इति दिव्यनिर्गुणस्य दिव्यसगुणत्वं दिव्येश्वरस्वरूपत्व दिव्यदेववेषत्व च प्रोक्तम्, एवमेव दिव्यपरमेश्वरस्य दिव्यघनश्यामादिमानववेषत्व मानववेषदिव्यत्व चापि प्रतिपादित भवतीति। तद्योगेन देहिना श्रेयासि स्युरित्याह-**श्रेयांसीति**। सात्त्विकतनुवेषात् परमात्मनो दिव्यमानवस्वरूपात् साजात्यप्रयोज्यसर्वविधसेवनलाभेन जायमानप्रसादेन च नैर्गुण्यस्य दिव्यत्वस्य नैष्कर्म्यस्य परमभागवतधर्मस्यैकान्तिकोभक्तेः साध्यभक्तेश्च प्राप्त्या परमनिःश्रेयसात्मकस्वरूपसत्साकारचिद्घनैकमूर्तिमत्ताशाश्वततास्वरूपतावगमः परमब्रह्मानन्दभोगमग्नतावगमः, सेवामुक्त्यवगमोऽक्षरब्रह्मधाम्नीति।

**सूत्रे—ईक्षतेर्नाऽशब्दम् ॥ १ ॥ तथा दृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमभिधीयते ॥२॥ श्रुतौ—'पूर्वमेवाऽहमेवाऽऽसमिति तत् पुरुषस्य पुरुषत्वमिति' बृहदारण्यके ॥ १ ॥ 'आत्मैवेदमग्र आसीत्पुरुषविध' इति ॥ २ ॥**

---

**अथ सदेति** । श्रीहरेर्नित्य सिद्ध दिव्य मूर्तत्व साकारत्वं दिव्यमूर्तित्वमिति । हरिः साकारः, नित्यसिद्धदिव्यविग्रहवत्त्वात्, अथ विग्रहो हरिर्हरिरेव विग्रहस्तादात्म्याधेयत्वेन विग्रहत्वादिति हेतुः, यो विग्रहः स साकारः, आनन्दघनस्वरूपसत्सुमूर्तभगवतोऽनित्यस्य साधितस्याऽदिव्यस्य मूर्तेर्वारणार्थ नित्यादिविशेषणानि । वदन्ति च पौराणिकाः पद्म पु० उ० ख० अ० २५७—'परावस्था तु देवस्य दीपादुत्पन्नदीपवत्' । ४२ । 'अ० २५८—'दीपादुत्पद्यते दीपो यथा तद्वद् भविष्यति । परावस्थाः परेशस्य व्यूहाश्च विभवादयः ॥ ४ ॥' । भागवते ३।२६—'अवतारा असख्येया हरेः सत्त्वनिधेर्द्विजाः । यथाऽऽविदासिनः कुल्याः सरसः स्युः सहस्रशः' ॥ 'यथाऽऽहरद् भुवो भार ता तनु विजहावजः । कण्टक कण्टकेनैव द्वय चापीशितुः समम्' । १।१५।३४। एभिर्वाक्यैर्देहत्यागश्रवणेन देहान्तरश्रवणेन च भूतसघातदेहत्वमपि कल्पयन्ति, एतत्तु दर्शनलीलामात्रम्, आसुराणा तथा दर्शनदान भावनाऽनाधानार्थम् । भूतसघातदेहस्य परमात्मनाऽग्रहणात्, 'न चाऽस्य देहसस्थानो भूतसघातसभव.' । 'आनन्दमात्रकरपादमुखोदरादिः' । 'स्वाग्नवद् दृश्यते त्वस्य देहधारणवैभवः' । इत्यादिभिर्भगवतो नित्यसिद्धदिव्यविग्रहत्वस्यैव निर्णयात्, एतादृशदिव्यसाकारस्य, **श्रीहरेश्चेति** । प्रकृतिर्या त्रिगुणा माया तज्जन्या ये महत्तत्त्वाऽहकारमनइन्द्रियभूतादयस्तज्जन्या याऽऽकृतिरवयवी देहः तस्मान्निर्गतत्वात् तदविषयत्वात्, तदयोगात् आनन्दमात्रमूर्तित्वान्मायिकतत्त्वतन्वभावात्, तथा सृष्टिजीवेश्वराणा मायातो मुक्तिरूप यत् कैवल्य मोक्षस्तद्दानार्थ तैरर्थ्य यत्परमात्मनः सेवार्ह स्वरूप दृश्य स्पृश्य समाश्लेष्य चोपमर्द्य ग्राह्यम् उद्वाह्य समारोह्य सन्धार्य समालिङ्ग्य सुभोग्य समभाव्यं च यत्स्वरूप स्वेच्छया तदात्मकवेषत्वात् वास्तवमायिकवेषत्वाभावात् दिव्यमात्रत्वादेव तस्य मायिकाकारवर्जितत्वान्निराकारत्व वदन्ति सूत्रार्थमवलम्ब्य श्रुत्यर्थमवलम्ब्य स्मृत्यर्थमवलम्ब्य च तथातथाविधवृत्तिमन्तो विज्ञाः । तत्र सूत्रमाह—**ईक्षतेर्नाऽशब्दमिति** । 'स ऐक्षत बहु स्या प्रजायेये'त्यादावीक्षणकर्तुश्चेतनस्य कारणत्वेन प्रदर्शितत्वात् शब्देन श्रुतिवाक्येन यन्न निर्दिष्टम् अचेतन प्रधानमायात्मक साख्यप्रोक्त कारण तन्न कारणमिति, तथा च मायिकाकारेक्षणवतो न जगत्कारणत्वं किन्तु दिव्येक्षणवद्दिव्यसुमूर्तपरमात्मनो दिव्यसाकारस्यैव जगत्कारणत्वमिति त परमात्मान सूत्रमेतन्मायिकाकाररहित श्रुत्या साकार दिव्याकार द्रढयतीति । अथ सूत्रान्तरमाह—**तथा दृष्ट्युपदेशादिति** । 'न द्रष्टुर्दृष्टेर्विपरिलोपोऽस्ति' इत्यादिना परमपुरुषस्य नित्यप्रत्यक्षदृष्टिमत्ताया. कथनात् 'न दृष्टेर्द्रष्टार पश्येः न मतेर्मन्तार मन्वीथाः' इत्यागन्तुकचैतन्यगुणयोगिनम् आत्मान न पश्येर्न मन्वीथाः किन्त्वनागन्तुकनैसर्गिकद्रष्टार पश्येर्मन्वीथाः, किञ्च दृष्टेर्द्रष्टार मतेर्मन्तार माऽऽत्मान पश्येः किन्तु सर्वभूता-

**'स ऐक्षत' ॥ ३॥ 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः' ॥ ४ ॥ बृहन्नारदीये—'दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' ॥ ५ ॥**

---

न्तरात्मान परमात्मानमेवोपास्स्वेति परमात्मान साकार नित्यप्रत्यक्षदर्शिन मायिकाकार-रहित वदति । 'यो वेत्ति युगपत् सर्व प्रत्यक्षेण सदा स्वतः' इति मायिकाकारहितत्व प्रत्यक्ष-दर्शिसाकार परमात्मान वदति । मायाया जीवादौ च नित्यदृष्टेरसभवात् **पुरुषमपि** परमात्मान दिव्यमेनं दृष्टिमन्त मायिकाकाररहित दिव्याकार श्रीहरि पुरुपोत्तममभिधत्ते इति । **श्रुताविति । पूर्वमेवाऽहमिति ।** सृष्टेः स्थूलावस्थात्मकमत्स्थितेः पूर्व सूक्ष्मावस्थाया सूक्ष्मजडचेतनविशिष्ट एक एवाऽह कारणात्मक आस पुरुषो दिव्यमूर्तिरानन्दघनस्वरूप-सन्मूर्तिरहमास मद्दिव्यैर्मुक्तसमेवितो दिव्यव्यतिरेकिस्वरूपोऽहमासमिति एतदेव पुरुषस्य परमपुरुपस्य पुरुषत्व दिव्यनित्यसिद्धपुरुषाकारत्व मायिकाकाररहितत्वान्निराकारत्व स्वरूप-सिद्धदिव्याकारत्वं बोध्यमिति बृहदारण्यके प्रोक्तम्, अथ 'आत्मैवेदमग्र' इति । स्थूलावस्थ दृश्यमान सर्वम् अग्रे सृष्ट्यवस्थाऽनवच्छिन्नकाले, नामरूपविभागाऽनापन्नकारणावस्थासमये, आत्मैव परमात्मैव सूक्ष्मचिदचिद्विशिष्टो दिव्यपुरुपाकार. साकारः स्वरूपसद्दिव्यानन्दघन-मूर्तिर्भगवान् सर्वदिव्यसुरूपकिशोरमूर्तिरासीदिति मायिकाकाररहितत्वेन निराकारत्व दिव्या-कारत्व प्रोक्तम् । **'स ऐक्षते'ति** । सः कारणावस्थो भगवान् कार्याभिमुखसकल्पवान् सन् बहुविधकार्यावस्थ स्व निजेक्षणविषय चकार, स भगवान् कार्यात्मकबहुभवन सकल्प्य स्थूलजडचेतनशरीरविशिष्टः कार्यात्मकोऽभवत् । संकल्पकर्ता दिव्याकारः पुरुपोत्तमः किशोर-मूर्तिरेवेति इति । **पुरुषान्नेति** । पुरुषोत्तमाद्दिव्यानन्दघनस्वरूपसत्साकारमूर्तेः समान पर वाऽधिक किञ्चिदपि नास्ति, स भगवान् साकारमूर्तिः, सा मूर्तिरेव पराऽन्तिमोर्ध्वा काष्ठा दिक् स्थितिः, **गतिः**—प्राप्तिस्थानं च, आत्मनो मुक्तिदशायामानन्दभोगलब्धिस्थानात्मकदिव्याधार इति । परमात्मनो मायिकाकाररहितत्वान्निराकारत्व दिव्याकारमूर्तित्व प्रतिपादितम् । अथ **बृहन्नारदीय**पुराणे—**दिवीत्यादि** । दिवि दिव्येऽक्षरब्रह्मधामनि द्योतमाने प्रकाशात्मके ब्रह्मलोके एकोऽसमानाऽधिको विशिष्टो दिव्यमूर्तिः **पुरुषः** पुरुपोत्तमनारायणस्तिष्ठति व्यतिरेक-स्वरूपेणाऽऽनन्दघनस्वरूपसत्साकारैकरसघनसुमूर्तो विराजते, तेन चान्तर्यामिस्वरूपेण परमात्मना 'रूप रूप प्रतिरूपो बभूवे' तिश्रुत्युक्तरीत्या **सर्वमिदं** दृश्य ब्रह्माण्डसृष्टिरूप स्थूल-मीश्वरसृष्टिरूपं च तद्रीत्या स्थूल ब्रह्मसृष्टिस्वरूप च मुक्तमण्डलादि **सर्वं** स्वेतरसर्वत्वावच्छिन्न **पूर्णम्** गुणस्वभावसामर्थ्यशक्तिमहानन्दातिसर्वाऽऽपूरकप्रपूरित परिपूर्णम् अरिक्त किञ्चिन्मात्र-मपि तत्तदापेक्षिताऽन्यून विशिष्टसभृत वर्तते । अनेन परमपुरुपस्य मायिकाकाररहितस्य दिव्याकारसहितस्य याऽन्तर्यामिशक्तिस्तया सर्व व्याप्त पूर्णमपि तदात्मक तत्सञ्चालित सर्व विद्यत इति मायिकाकाररहितस्यान्तर्यामिणो भगवतो निराकारतया वर्णनेऽपि साकारत्व प्रतिपादितम् ॥ ५ ॥

**पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजा इति ॥ ६ ॥ स्वभक्तेभ्यो रमते स मे सर्वस्वम् ॥ ७ ॥ सर्वे निमेषाजज्ञिरे विद्युतः पुरुषादधि, भारूपः सत्यकामः सत्यसंकल्पः आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः तस्य हैतत्पुरुषस्य रूपं यथा महारजनं वासः ॥ ८ ॥**

---

**पुरुषो ह वै इति** । परमपुरुषो ह वै श्रीस्वामिनारायणपरमात्माऽनादि-श्रीकृष्णनारायणः साकारदिव्यानन्दघनमूर्तिः स एव व्यतिरेकस्वरूपः स एव च सूक्ष्म-जडचेतनविशिष्टकारणावस्थापन्नः स्वय स्थूलप्रजास्वरूपो भवितुमसकल्पयदिति ? अनेन कारणावस्थदिव्यपरमपुरुषस्य परमात्मनः स्थूलदिव्यसुमूर्तता प्रतिपादिता मायाकाररहितत्वेन निराकारत्व दिव्याकारसहितत्व च प्रतिपादितम् । **स्वभक्तेभ्य इति** । निजेभ्यो मुक्तेभ्यो रमते दिव्यसाकारपुरुषोत्तमः सः, 'स एकाकी न रमते द्वितीयं रन्तु रामयितुं चैच्छत्, रमणयोग्या च विशेषसृष्टि साधयित्वा सृष्ट्यन्तर्गतजीवान् रामयितु तदन्तःप्रविष्टः सन् सजाती-यसुरूपदिव्यवेषो भवन् सॅश्च मानवाद्याकारो रमते रामयते चेति, मानवदिव्यपुरुषोत्तम उक्तः स मानवदिव्यसाकारोऽत्र मे दासस्य सर्वस्वं सर्वमिष्टं चाक्षरधाम्न्यपि यत्र क्वापि लोकान्तरेषु विहरामि तत्र सर्वत्र स मे सर्वस्व मदीयसर्वात्मकत्वमिति ॥ ७ ॥

**सर्वे निमेषा** इति । निमेषा निमेषक्षणादिकालाः कालपरिच्छेद्याः पदार्थाश्च सर्वाः सृष्टयो द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावशक्त्याद्यात्मका अदृश्या दृश्या अदिव्या दिव्याश्च सूक्ष्माः स्थूला जडाश्चेतनाश्चाऽवस्थात्मकास्ताः सर्वा अपि, **विद्युतः**—विद्योतमानस्य सर्वाति-रिक्तप्रकाशवतः सर्वेभ्यः प्रकाशदातुः पुरुषोत्तमात् पुरुषादक्षरातीतपरब्रह्मत एव, **जज्ञिरे**—अवस्थान्तरमापुराप्नुवन्त्याप्स्यन्ति चेति । स दिव्यसाकारपरमात्मा तत्सर्जको तद्रक्षकस्तत्ति-रोधायकश्च सृष्टावपि स एवाऽधिदैवम् अन्तर्यामिस्वरूपो वर्तते साक्ष्यपि स एव प्रेरको नियामकश्च विशिष्ट विशेष्य स एवेति । तस्य विशेषणान्याह—**भारूपः** प्रभाव्याप्तो विद्योत-मानः सर्वप्रभाप्रदाता तस्य भासा सर्वमिद विभातीति, सत्यकामः यद्यत् कामयते तत्तत्फलं तत्र तत्र सम्पद्यते, यद् यच्च संकल्पयति स्रष्टु तत्तत्कारणं तत्तत्कार्य च सम्पद्यते, आसमन्ताप्रकाशमानानन्दघनस्वरूपसत्सुमूर्तः स परमात्मा 'आकाशशरीर ब्रह्म परब्रह्मेति चिदाकाशशरीरः परमात्मा चाकाशवन्निर्लेपो विशिष्टः सन् शरीरी सन्नप्यविशिष्टोऽशरीरी चेति व्यतिरेकी चाप्यन्वयीति, अत एव च सर्वशरीरकर्मा सर्वप्रवर्तकः सर्वक्रियाधिष्ठाता, सर्वकामानन्दमयः सर्वकामितवस्त्वात्मकः 'यद्यद्विभूतिमत्सत्त्व तत्सर्वं विद्धि मामकमिति' सर्वचैतन्यात्मककामधर्मः स एव परमात्माऽत्र च परत्र चेति । सर्वे सुगन्धाः सुरभयः सर्वे रसा आस्वादा मिष्टताश्च रस्यभावाश्च शृगारादिरसाश्च यन्मया यत्स्वरूपा यदात्मकाश्चेति, तस्य परमेश्वरस्य ह तत्रत्यस्य दिव्यस्याऽत्रत्यस्य ह पुरुषस्य दिव्यमानववेषस्य रूपं सुरूप

**य एषोऽन्तराऽऽदित्ये हिरण्मयः पुरुषः दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्ण इत्यादिः ॥९॥ अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः ॥१०॥ चरणं पवित्रम् ॥११॥ यं सर्वे देवा नमन्ति**

---

सुस्वरूप रमणीयाकारमूर्तिः यथास्थानाऽवस्थितयथापेक्षसर्वाऽऽवश्यकाऽवस्थितिका सर्वातिरिक्त-सुघटस्वरूपा वर्तते, यथाऽस्याऽऽनन्दस्य मीमासा भवति तथाऽस्य रूपरसगन्धस्पर्शादीनामपि मीमासा भवति सर्वाऽधिकसौन्दर्यमीमांसा भवतीति । अत्र निदर्शन लौकिकमप्यलौकिक यथा महारजन वासः, सर्वत्र वासुदेवात्मक व्यापक महामहारजन सुरञ्जितं बृहद् अम्बर चिदम्बर ब्रह्माऽम्बरम्, सर्वत्र ब्रह्माऽम्बरस्यैव व्यापकत्वात् सर्वरंगविशिष्टत्वात् सर्वरंगाभि-व्यञ्जकत्वात् सर्वरंगात्मकत्वात् महारजन वास इत्युक्तम्, एतल्लोकेऽपि चातिधवल चाम्बर सुकुसुम्भरगादिरञ्जित नूतनरग सप्रभ सुप्रकाशमिव शोभते सुशोभं भवतीति तद्वत् । **वास** इति व्यापकत्वप्रदर्शनार्थम् सूक्ष्मव्यापकतार्थकम् । महा—इति बृहत्त्वार्थकम्, रजनमिति सुशो-भिततार्थम् ॥८॥ **य एष** इति । यः श्रीपुरुषोत्तमनारायणोऽक्षराधिपतिर्दिव्यसाकारः परमात्मा स एव भूमपुरुषस्य देवगृहे भूमेश्वरो हीरकेश्वरो हीरकमयो दिव्यः परमात्मा विराजते, स एव परमात्मा दिव्यहिरण्मयमूर्तिः सूर्यनारायणोपास्यः परमात्मा देवैः सूर्यादिभिर्दृश्यते हिरण्यनिभश्मश्रुको हिरण्यनिभद्योतमानकेशः समस्त एव सुवर्णः सुन्दरसुरूपः स एव दिव्य-मानववेषः, इत्येव सर्वत्र दिव्यसुमूर्तता प्रतिपादिता ॥ ९ ॥ अथान्तर्यामिण त दिव्यमाह **अङ्गुष्ठमात्र** इति । अङ्गुष्ठस्य या मात्रा नखाग्रच्छाया तत्रैकाशसमः सूक्ष्मोऽणुः सगुण-साकारः श्रीपुरुषोत्तमो भगवान् सर्वान्तरात्माऽन्तरात्मा सदा जनाना शरीरिणा सर्वतनुभृता हृदये हृदि अयते य आत्मा तस्मिन् चेतनात्मनि सन् सन् विद्यमानः स्वरूपसन् आनन्द-घनान्तर्यामी सूक्ष्ममूर्तिः सन्निविष्टो वर्तते, तेनाऽन्तर्यामिणाऽन्तर्निविष्टेन परमात्मना साकारेण तदनुस्वरूपाकारगर्भाकार आत्माऽपि सदान्तस्तत्समाकारसाकार इति शरीरशरीरिणौ साकारा-विति दिव्याकारौ भवत इत्यभिप्रायः श्रीहरेरिति । अङ्गुष्ठमात्रमिति तु 'अणोरणीयान्महतो महीयानि'ति श्रुतिप्रतिपादितार्थस्मारकम्, मात्रमित्यणुस्वरूपम्, अङ्गुष्ठमिति मध्यमस्वरूप महत्स्वरूप च, 'रूप रूप प्रतिरूपो बभूवे'ति सर्वानुरूपस्वरूपसुमूर्त इति तत्तात्पर्यम् ॥१०॥ **चरण**-मिति । चरणम्, चरणारविन्दयुगल चेष्टाऽऽचरण च यस्य पवित्र पावनकर च, चरणयुगलेन सुमूर्तदिव्यसुस्वरूपः सुदिव्यमानववेषश्च सुदिव्यदेवेश्वरादिस्वरूपश्चेति भगवान् प्रदर्शितः ॥११॥ **यं सर्वे** इति । सर्वे देवा दिव्यमुक्ताः सर्वेश्वराः सर्वे ब्रह्मवादिनो ब्रह्मवेत्तारः सर्वे त्यागियति-मुनिमहर्षयश्च ब्रह्मपरायणा ब्रह्म वदन्तो ब्रह्मिष्ठा ब्रह्मभोजिनो ब्रह्मानन्दा एव तथा मुमुक्षवो मुक्तीच्छवो मोक्षमार्गगन्तारो मोक्षजिज्ञासवो मोक्षभागिनो मोक्षाश्रयाश्रयान्वयिनो य श्रीहरि परमात्मान नमन्ति वन्दन्ते स्तुवन्ति प्रशसन्ति चोपासते ध्यायन्ति चिन्तयन्ति मन्वते शृण्वन्ति साक्षात्कुर्वन्त्यपि चेति । स मानववेषो दिव्यो देववेषो दिव्य ईश्वरवेषो दिव्यो धामेशवेषो

**मुमुक्षवो ब्रह्मवादिनश्चेति। स्कन्दपुराणे–'वासुदेवः परं ब्रह्म बृहत्यक्षरधामनि। आदावेकोऽद्वितीयोऽभून्निर्गुणो दिव्यविग्रहः ॥ १ ॥ हरिवंशे-ततस्तेजः प्रज्वलितमपश्यत्त तदाम्बरे। सर्वलोकं समाविश्य स्थितं पुरुषविग्रहम् ॥२॥**

---

दिव्यपुरुषोत्तमोऽन्तर्यामिवेषो दिव्यसाकारोऽन्वयी व्यतिरेकी च दिव्यसुन्दरसुमूर्त इति। प्रोक्तः ॥ तमेव भगवन्त स्कन्दपुराणे ब्रह्मणि दिव्यपुरुषोत्तममाह—**वासुदेव** इति। वसति सर्वत्र दीव्यति चेति व्यापकदिव्यस्वरूपः परब्रह्म श्रीहरिर्बृंहति सर्वत्र वर्तमाने व्यापकेऽन्वयिनि प्रकाशात्मकेऽक्षरधामनि स्वय भगवानेको निजसमातिरेकिविशिष्टतत्त्वान्तररहितः, अविभक्त-नामरूपकारणावस्थोऽपि नित्यव्यतिरेकिस्वरूपसदानन्दघनसुमूर्तः स्वयं श्रीहरिः परमात्मा, **अद्वितीयः**—कालपरमाण्वादिस्वतन्त्रकारणान्तरप्रतियोगिरहितः, स्थूलावस्थयावत्तत्त्वविशिष्ट-स्वसमाऽतिरेकिप्रतिस्पर्धिविशिष्टतत्त्वरहितः। यद्यप्यक्षरब्रह्मणोऽपि धामत्वेनाऽन्वयित्वे सति सेवकसुमूर्ततया व्यतिरेकित्व व्यतिरेकित्वे सति चान्वयित्वमिति, तथापि तत्राप्यन्वयित्वे सति व्यतिरेकित्वमत्र परब्रह्मत्वेन परमेश्वरे विवक्षितम्, व्याप्यत्वानवच्छिन्नान्वयिव्यतिरेकित्वयोरे-काऽद्वितीयपदतात्पर्यात्। कारणावस्थत्वे सति दिव्यमूर्तित्वमेकपदेनोक्तम्, कार्यावस्थत्वे सति दिव्यमूर्तित्वम् अद्वितीयपदेनोक्त चेति। यद्वा एकः सन्ननेक एकपदार्थ., अनेकः सन्नेकोऽ-द्वितीयपदार्थः। न च विरोधः, परव्यूहविभवार्चान्तर्यामिस्वरूपादिभिस्तथा तत्र समन्वयात्। अथैकोऽद्वितीय इत्यनर्थान्तरम्, तथाविधस्य तथाविधत्वात्, तथाविधस्य अतथाविधत्वे तु विरोधः, एकस्मिन् द्वयोर्विरुद्धयोरसत्त्वेन प्रमात्वानुपपत्तिः। अथ तर्हि विशिष्टब्रह्माऽद्वैत-मद्वितीयपदार्थः, विशिष्टैकमिति विशिष्टमेकपदार्थः, यद् विशिष्टमेक तद् विशिष्टब्रह्माऽ-द्वैतमिति व्याप्तिः, यत्र विशिष्टब्रह्माऽद्वैतत्व नास्ति अक्षरे ब्रह्मणि तत्र विशिष्टैकत्व नास्ति विशिष्टमूर्ताऽमूर्तद्वित्वस्य सत्त्वात्, तथा **चाऽऽदौ** सृष्ट्यादौ सृष्टौ च तथैव सत्त्वात् आदावभूत् स दिव्यगुणो मायागुणवर्जितो निर्गुणो निःशेषदिव्यगुणो दिव्यविशिष्टज्ञानी दिव्यविशिष्टशरीरी दिव्यविशिष्टस्वरूपसत्साकारानन्दघनसुमूर्त इति। स भगवान् धामस्थो दिव्योऽत्राऽपि दिव्यमानवस्वरूप उभयथा प्रोक्तव्याप्तिमानिति तदर्थः ॥ १ ॥ **हरिवंशे चेति**—ततः–स्तुत्यनन्तरम्, वसुदेवः, तदाऽम्बरे आकाशे सर्वत्र व्यापकम्, सर्वलोकं सर्वप्रकाशकरम्, **सर्वलोकान्** स्वस्मिन् **समाविश्य** असीमतेजस्सु ब्रह्मलोक मोक्षधामानि ईशलोकान् जीवलोकान् मायासृष्टीश्च समग्राः स्वान्तरव्यापीकृत्य स्वय भूत्वा तु व्यापक महातेजस्तत्, सर्वेष्वाविश्येति च, तद्दिव्यतेजः **प्रज्वलितं** प्रद्योतमान सर्वत्र मूर्तिनिर्यासक चाऽत एव **स्थितं** च निःसरन्त च तेजोमय पिण्डमपि तेजोनिधान तेजस्विन दिव्यसुमूर्त किशोरमूर्ति **पुरुषविग्रहं** परमपुरुषनरस्वरूप नरदेह नरात्मकाऽऽनन्दपिण्ड पुल्लिङ्गवत्तया द्योतमान तत्तेजोनिधान साकार परमात्मानं श्रीहरिं दिव्याभिन्नमानवाऽभिन्नदिव्यकिशोरा-

**वेदस्तुतौ –स्वसृष्टमिदमापीय शयानं सह शक्तिभिः। तदन्ते बोधयाञ्चक्रुस्तल्लिङ्गैः श्रुतयः परम् ॥ ३ ॥ यथा शयानं सम्राजं वन्दिनस्त-**

नन्दघनमूर्तिमेकतत्त्वात्मक परमपुरुष ददर्शेति। **पुरुष**विग्रहमित्यनेन दिव्यत्वे सति मानुषत्व मानुषत्वे सति दिव्यत्वं च सुकिशोरानन्दघनमूर्तिस्वरूप दर्शितमिति। स्थितमित्यनेनैकदेशस्थ-दिव्यस्वरूपम्, पुरुष इत्यनेन मानवकिशोरदिव्यमूर्तिमत्त्व दिव्यमूर्तमेवेत्येतत्, विग्रहमित्यनेन पुल्लिगादिसकलदिव्यकिशोराग स्वरूप प्रदर्शितम्। विगिष्टो ग्रहो ज्ञान विग्रह चेति ज्ञानघनमा-नन्दघनमात्र चावेदितं बोध्यम् ॥ २ ॥ **वेदस्तुताविति**। वेदाः श्रुतयस्ताभिः स्तुतः परमात्मा, तत्र स्तोत्रे दिव्यमानवकिशोरदिव्यसाकारानन्दघनमूर्तिः परमात्मा प्रोक्तः। **श्रुतयो** मूर्तिमत्यः स्तावकचेतना. सरस्वत्यः पर परमात्मान **तल्लिङ्गैः** तस्य परमात्मनः साकारदिव्यपुरुषस्य लिगानि लक्षणानि स्वरूपतटस्थोभयात्मकानि 'सत्य ज्ञानमनन्त ब्रह्म' 'जन्मादिकारणमि'त्यादीनि चेति तैर्वाणीस्वरूपैः स्वात्मकैरेव श्रुतिभिः, हेतुहेतुमद्भावे तृतीया, पृथक्कृत्य प्रथमाः श्रुतयः कर्त्र्यः, सुमूर्तयः श्रुतयः स्वैकागवाण्या परमात्मान शक्तिभिः ज्ञानबलैश्वर्यवीर्यतेजःशक्तिभिः सर्वसामर्थ्यैः सह तिरोभूतैः सह, स्वस्मिन् तिरोभाव्य, शयान सूक्ष्माऽवस्थापन्नम्, पूर्वं स्वेन सृष्टमपि स्थूल सर्वं चेद चैतत्सजातीय पूर्वसृष्टीय समापीय स्वस्मिन् विलीनीकृत्य सूक्ष्म कृत्वा वर्तमानम्, शयनसमाप्त्यर्थं तदन्ते शयनस्याऽन्तसमये बोधयाञ्चक्रुर्जागरितं वा जाग्रद्भावापादनार्थं प्रशशसुः सदा जागृतमपि त श्रीहरि तुष्टुवुः। अथाऽत्र प्रथम दिव्य ततः सृष्टिस्थितिक दिव्यमानवादिस्वरूप पुनश्च सृष्ट्यसमये दिव्यमिति दर्शितम्। ननु–श्रुतयश्चेतनामुक्ता भगवद्वाणीस्वरूपा भगवन्त सूक्ष्मदशापन्न ता अपि सूक्ष्मदशापन्नाः कथ स्तुवीरन्निति चेन्न। जाग्रच्छयान निमीलितलोचन स्थौल्यारम्भानु-योगिन परमात्मान स्थौल्ययोगिन्यः श्रुतयोऽस्तुवन्निति, यद्वा व्यतिरेकिस्वरूपस्य मुक्ताः श्रुतयोऽस्तुवन्निति नाशकाऽवकाशः। **तदन्ते** इत्यनेन प्रलयान्ते शयनान्ते शयनोत्तराऽ-शयनोपलक्षित तमस्तुवन्निति बोधनान्नाऽऽशकावकाशः। सम्राजः शयननिद्रात्याजनार्थमिवेति तु नात्राऽभिप्रायः, जाग्रतोऽपि शय्यावलम्बितस्य शय्यापरिहारार्थं स्तवन चेत्यत्राभिप्रायः। सृष्टौ वा वर्तमानस्य श्रीहरेः प्रागारम्भक्रमस्मरणात्मकस्तुतियोजनाद्वा न विरोधाऽऽशकाऽपि। प्राग् दिव्यत्व सृष्टौ मानुषदिव्यत्व पुनर्दिव्यत्व चेति सूचनार्थकयथार्थपरकत्वमात्र वा प्रयोजनमस्येति नाऽर्थोऽननुषङ्गः ॥ ३ ॥ **यथेति**। सर्वावस्थासु दिव्यविग्रहवत्त्वाऽऽवेदनार्थं रूपकदृष्टान्तेनाह—**यथा शयानमिति**। यद्वत् अनुजीविनो बन्दिनः सुज्ञाः सुभानाः साकारमूर्तयः, तथा श्रुतयोऽपि श्रुत्याश्रयाधीनाः, स्वस्वाम्यनुजीविन्यः, साकारमूर्तयः मुक्तकन्या-चेतनाः, रात्रौ सुप्त राजानम्, स्वकार्यं चाऽन्याधीनीकृत्य विश्रान्तिस्थितौ निर्व्यापार समाजमिव, स्वकार्यं लोकपालाधीनीकृत्य निर्व्यापरतया विश्रान्तिस्थितिकं दिव्यसाकारमपि परमात्मानम्, **प्रत्यूषे**—व्यापारनियोगारम्भयोग्यतावत्स्थितौ, तदाज्ञानुसारेण समज्ञापित-

त्पराक्रमैः । प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविनः ॥ ४ ॥ पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः ॥ भागवततृतीये—स वा एष तदा द्रष्टा नाऽपश्यद् दृश्यमेकराट् । मेनेऽसन्तमिवाऽऽत्मानं सुप्तशक्तिरसुप्त-

---

समये प्रतिकार्योद्गमोपक्षणे, यथाक्रमम् अभ्येत्य सम्मुखीभूय, सुश्लोकैः प्रशस्तैस्तस्य सम्राजः परमात्मनः पराणि यान्याक्रमणानि चरित्राणि लीलासामर्थ्यानि गुणक्रियाचमत्काराश्च तैः, गीतैः पुनर्गीतैश्च, **बोधयन्ति**—जागृवास निर्वर्तयन्ति, तत्र तत्रार्थे विशिष्टाकर्षणवन्त प्रसाद-सुमुख सम्पादयन्ति, बन्दिनः श्रुतयश्च प्रसादपात्रता समासादयन्ति निजात्मनः, तेन दिव्यस्य दिव्यस्वरूपस्य व्यापृतस्याऽव्यापृतस्य पुनर्व्यापृतार्थक वर्णयन्ति, तथा च सर्वथा व्यवस्था-यामपि दिव्यसाकारत्व प्रतिपादितमिति । दृष्टान्तोऽपि तावन्मात्रेऽर्थे योक्तव्यः, अन्यथाऽ-ज्ञानित्वाद्यापत्तिः, कारणकार्यदशस्य परमात्मनो नित्यदिव्यसाकारत्वमिति पद्यस्यैतस्य तात्पर्यात् ॥ ४ ॥ **पुरुषविध** इति । अन्नमयकोश· प्राणमयकोशः मनोमयकोशो विज्ञान-मयकोश आनन्दमयकोशश्चेत्युक्ता· कोशा ब्रह्मविद्यायाम्, तत्र कोशेषु परमात्मनोऽन्वयस्तथा च प्राग् दिव्यस्वरूपस्य परमात्मनोऽन्तःप्रविष्टस्याऽन्तर्यामिणः साक्षिणश्चापि दिव्यस्वस्वरूपत्व ततश्च पुनर्व्यतिरेकिणोऽपि तस्य दिव्यस्वरूपत्वमित्यावेदितम् । **चरमः** आनन्दमय· आनन्दघनः **पुरुषविधः** दिव्यकिशोरस्वरूपसत्साकाराऽऽनन्दघनैकरसचैतन्यसुमूर्तदिव्यपुरुषो मानवविधोऽपि **पुनर्यः** स्वाक्षरधामस्थदिव्यसाकार इति विशेषतो वर्णितः ।

**भागवततृतीये** इति **स वा एष** इति । अयमात्माऽन्तर्वर्तिस्वान्तर्यामिसाका-रानुस्वरूपाकारो नित्यस्वात्मकप्रत्यक्षदृष्टिमान्, यस्य दृक् क्वापि न सुप्ता लीना भवति, सुषुप्तौ मूर्च्छाया समाधौ चान्यत्रापि स्वमानस भवात् स्वस्वरूपावस्थानात् स्वस्येतराऽ-नपेक्षितशाश्वतज्ञातृत्वात् नित्यस्वद्रष्टा स्वान्तर्यामिद्रष्टा च, किन्तु बहिष्टः सुप्तशक्तिः कार्याऽ प्रयुक्तसामर्थ्यः सूक्ष्मदशापन्नसामर्थ्यान्वितः साकारमूर्तिः सर्वविधविशेषकार्यानन्वितः सन् साधारणो जनो निष्कर्मा स्वात्मानमसन्त सत्ताशून्य वा कार्याऽयोग्य वा यथा मेने तथा भगवानेकराडपि सर्वनियन्ता सर्वशास्ता सर्वद्रष्टा सर्वप्रेरयिता सर्वशक्तिदाता सर्वप्रकाशयि-ताऽपि निर्मनस्क इव तदा सुषुप्तशक्तिदृशो नाऽपश्यत् सदपि दृश्य सृष्टिस्वरूप स्थूलमपि शरीरमपि व्यापृतमपि यथोदासीनो न पश्यति गृहदारात्मजक्षेत्रभवनस्वगुणादि तथा नाऽय व्यतिरेकी सन् पश्यति किमपि पश्यन्नपि न पश्यति दिव्यभावेन मायिक न पश्यति पूर्व दिव्यो मध्ये मानवदिव्योऽन्ते ब्रह्मदिव्य इत्यदिव्य न पश्यतीति पूर्व, दृष्ट पुनः सुयन्त्रित चालित चक्र प्रचालनार्थ नाऽवश्यकतेति न पश्यतीति दृश्यतया न पश्यतीति किन्तु सार्वज्ञ्यभावेन पश्यतीति नित्यदिव्यसाकारताऽभिव्यञ्जिता, तथा च सर्वावस्था दिव्येति प्रकाशितम् ॥ अथ **मेने** इति पदेन सदपि दर्शनम् अदर्शनमिव विषयीचक्रे, सतो भवतीवाऽर्थेन किञ्चिद्धर्म-

**दृक् ॥ ५ ॥ भगवानेक आसेदमग्र आत्माऽऽत्मनां विभुः ॥ ६ ॥ तृतीये सृष्ट्यादौ तत्त्ववचनम्—नमाम ते देव पदारविन्दं प्रपन्नतापोपशमातपत्रम् । यन्मूलकेता यतयोऽञ्जसोरुसंसारदुःखं बहिरुत्क्षिपन्ति ॥ ७ ॥**

---

न्यूनसादृश्यमिति सन्तमेव चाऽनार्थदृष्टिविषयताऽनवच्छिन्न चक्रे, ततो नाऽस्य परमात्मनो नित्यदिव्यत्वे क्षतिसमुद्भव इति दृश्य द्रष्टेत्युभय नित्यसिद्ध तत्रैवाऽर्थस्य यथाकथञ्चिद् योजना ॥ ५ ॥ **भगवानेकेति** आत्मनाम् मध्ये चेतनेष्वणुषु सर्वेषु सर्वविधेषु मुक्तेष्वीश्वरेषु जीवात्मसु चाऽऽत्माऽन्तर्यामी नियामकोऽन्तःप्रविष्टो वर्तमानो धाम्न्यपि च वर्तमानो दिव्यो मानवाकारोऽपि दिव्य. सर्वाकारोऽपि दिव्याकार एकदेशस्थोऽपि सुमूर्तो विभुर्विशिष्टविशेष्यात्मकः सर्वविशिष्ट' सर्वत्र स्वाधेयतासंसर्गेण व्याप्यत्वसंसर्गेण च तादात्म्येन तादात्म्याधेयतासंसर्गेण च व्यापकोऽत्यन्ताऽसत्त्वाऽप्रतियोगी सर्वत्र वृत्तिमान् सर्व यत्र वृत्तिमच्चेत्याधारोऽपि स्वयम् आधेयोऽपि स्वयम् उभयसंसर्गोऽपि स्वय धर्मोऽपि स्वय 'ततोऽसि सर्वः' इति विशिष्टात्मकविभुरय सर्वभगैरैश्वर्यैर्युक्त. साकारकिशोरदिव्यस्वरूपानन्दघनमूर्तिः परमात्मा, सृष्ट्यनवस्थानसमये अग्रे प्रलयावस्थाया यदा सर्वम् **इदं** सूक्ष्मदशापन्न निजशरीरात्मक नामरूपाऽनर्ह समासीत् तदा व्यतिरेकः स्वराडपि दिव्यमूर्तिर्द्योतमानस्वरूप **एकः** स्वसमानाऽद्वितीयः कारणान्तरसत्ताया अनिरूपकः स्वनिष्ठमात्रकारणसत्ताकः कारणान्तरद्वितीयस्वतन्त्रसत्तावर्जित एवाऽऽस, तत्रापि व्यतिरेकी सम्राट् दिव्यसाकाराऽऽनन्दघनमूर्तिर्मुक्तोपसेव्य आस, तदानीं स दिव्य एवेदानीमपि दिव्यम।नव इति स्मरणार्थमुक्तम् 'इदमि'ति अथ आसेति समयदर्शनेन अनासेति भविष्यद्दर्शनमपि दिव्य ज्ञापित भवति, भविष्योत्तरं भविष्यमपि दिव्यदर्शन ज्ञापित भवतीति, कालभेदेऽपि कालेयस्यैकस्वरूपत्वे बाधकाऽभावात् एक इत्यनेन प्राग् दिव्यत्वम्, विभुरित्यनेनाऽन्तर्यामिदिव्यत्वम्, इदमित्यनेन मानवदिव्यत्वम् अग्रे इत्यनेन तदग्राग्रेऽपि दिव्यत्वम् सर्वदा दिव्यत्वे चरमेऽपि दिव्यत्व किशोरमूर्तेः श्रीहरेः श्रीस्वामिनारायणपरमात्मनः प्रतिप।दितमिति ॥ ६ ॥ भागवते **तृतीये** च सृष्ट्यादौ तत्त्वस्य दिव्यत्वस्य वचनमाह—**नमाम ते देवेति** । हे देव दिव्यद्योतमानमूर्ते भगवन् ! प्रपन्नाना लोकेषु शरणपतिताना देहिना संसारिणामप्यसंसारजिज्ञासूना त्रिविधतापाना दुःखानामाध्यात्मिकानामाधिभौतिकानामाधिदैविकाना तदन्याना सांस्कारिकाणा वाऽसुखाना पीडात्मकानाम् उपशमो निवृत्तिस्तत्र आतपत्रमिव छत्रस्वरूप ते तव सुमूर्तदिव्यमानवस्वरूपस्य पदारविन्दं चरणकमलयुगल नमामो वय देवादयः, दृष्टम् अनुष्ठानाय फलनियत गृह्यते, क दृष्टमिति चेत् यतीना तथा शरणपाते, यतयो नियमितेन्द्रियाऽन्तःकरणवृत्तयः शीलव्रताः साधवो यत्नशीलाश्चेतरा अपि, **यन्मूलकेताः** । यत् यस्माद्धेतोः, यथार्थफलदत्वहेतोः, प्रयोजकात् तत एव मूल पादपद्ममूलम् आधारस्तम्भशक्त्याश्रय फणात्मकमूलम् अंघ्रिद्वयम् आद्यारम्भांगम् भूमित आद्यारंभांगं पादपद्माग्रद्वयम्, तदेव केतो निकेतो निवासालयो येषा ते यतयः पादनिवास-

**मार्गन्ति यत्ते मुखपद्मनीडैश्छन्दःसुपर्णैः ऋषयो विविक्ते ।**
**यस्याऽघमर्षोदसरिद्वरायाः पदं पदं तीर्थपदं प्रपन्नाः ॥**
**अथ निराकारत्वम्—'वेदाऽहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्' ।१।**

---

यत्नशीला भक्ताः, उरूणि यानि ससारस्य देहदैहिकव्यूहात्मकस्य कुसारस्य कुसारोत्थानि दुःखानि सुखविरोधीनि विलक्षणदाहोत्पादकानि पीडाद्वेगाऽशान्त्याद्यात्मकानि यानि यान्यप्यात्मनां प्रतिकूलतया वेदनीयानि तानि तानि सर्वाण्यपि बहिरेव दूरे एव उत्क्षिपन्ति, सन्ति चेत् निवारयन्ति अनागतानि चेत् निरोधयन्ति वर्तमानानि चेत् क्षपयन्ति भुज्यमानानि चेत् क्षीणयन्ति, तादृश दिव्यमूर्तेस्तव मानवदिव्याऽङ्घ्रिद्वय पुनरपि सदा दिव्याऽङ्घ्रिद्वय शाश्वतमिति साकारता सगुणता बोधिता । यतयो यदि ब्रह्ममुक्तास्तेषा दुःखाऽभाव एव, यदीश्वरास्तेषा स्वल्पदुःखाशयोगः तन्नाशार्थमुपासनावत्त्व यतित्वम्, यदि जीवास्तेषा दुःखनाशक मानवदिव्याङ्घ्रिद्वयं चेति मानवदिव्यसाकारता प्रागपि दिव्यसाकारता उत्तरमपि दिव्यसाकारता दर्शिता ॥ ७ ॥ **मार्गन्तीति**—ऋषयो ब्रह्मशीलाः आर्षाः, ते तव, पद मार्गन्ति, विविक्ते एकान्ते स्वात्मस्वरूपे, तव पद साकारमूर्तिचरणारविन्द मार्गयित्वा ध्यायन्तीति, ये प्रपन्नाः शरणागता आत्मनिवेदिनस्त एव ध्यायन्तीति, अन्ये तु ध्यायन्त्यपि न ध्यायन्ति, अनात्मनिवेदित्वेनाऽन्यमार्गणपरत्वात् । पद चरणारविन्द स्थानमक्षर गम्यस्वरूप वा च, यस्य दिव्यस्य परमात्मनस्ते किशोराऽऽनन्दघनदिव्यसगुणसाकारमूर्तेः पदम्, तदेव तारक तीर्थपदम्, तीर्थाना स्थानम्, यदाश्रयेणाऽतीर्थान्यपि तीर्थानि भवन्ति, अतस्तीर्थास्पदानामपि तीर्थकर महातीर्थ चरणारविन्दयुगलम्, तदेव तीर्थ तारकत्वात् पापनाशकत्वाद्, अघाना पापाना मर्षो नाशो येन तादृश यदुदकम् उत्कृष्टत्व तस्य सरित् प्रसारणकरी वरा स्थितिः सरिद्वरा, पापनाशकशक्तेः पद स्थान दिव्य तव चरणयुगलमिति । तन्मार्गन्ति मृगाः ऋषयः । विविक्ते निराबाधप्रदेशे समाधियोगिनि स्वस्वरूपस्थले, तत्र छन्दःसुपर्णैः—छन्दासि सामानि स्तुतयः स्तोत्राणि, उपासनोपकरणानि शब्दश्रवणमनननिदिध्यासनात्मकानि कारणभूतानि साधनानि, तान्येव सुपर्णानि ज्ञानक्रियात्मकानि पक्षाणि उपासनात्मकज्ञानानि पूजनाद्यात्मककर्माणि च पतत्त्राणि तैः करणैः साधनैः यानैः कृत्वा मार्गन्ति गहनेऽखाते तलेऽसीमविशाले चिदात्मनि क्षेत्रे नैजे मार्गन्ति । **मुखपद्मेति**—तव मुखमेव पद्म मुख पद्ममिव मुखपद्मम्, प्रत्यात्मनियतमूर्त्तिमत्त्वेनाऽनन्तमूर्तीना मुखान्यनन्तानि, तान्येव नीडानि नीडवद्विरामस्थानानि वृत्तिविश्रान्तिस्थानानि स्वात्मरमणस्थानानि तैर्द्वारैस्तज्जन्यसुखाप्त्याऽपि दास्यसुखापादनार्थ प्रथममुखदर्शनोत्तर पादप्रपन्नत्वार्थ पादमार्गणमिति । मुखदर्शनोत्तर प्रपत्त्या ज्ञानेन कर्मणा च पाददर्शनपरिचरणमभिलषन्ति मुनय इति । अनेन धाम्नि दिव्यमूर्तिदर्शन समाधिमताम्, अत्र दिव्यमूर्तिदर्शन ज्ञानक्रियावताम्, पुनर्दिव्यदर्शनं सर्वथा प्रपन्नानामिति दर्शितम् ॥ **अथेति निराकारत्वम्**—मायिकाकाररहितत्व दिव्याकारसहितत्व च बोध्यम् ।

**यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युतः प्रपश्येत् । अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैरिति ॥ २ ॥ यस्मात्परं नाऽपरमस्ति किञ्चिद् यस्मान्नाऽणीयो न ज्यायोऽस्ति किञ्चित् ॥३॥ दिव्यो ह्यमूर्तः पुरुषः ॥**

---

**वेदाऽहमेतमिति**—अहम् उपासकः, एत सन्निकटवर्तिन चान्तरात्मान एरुपं पुरुषोत्तमं नराकारं दिव्य द्योतमानमूर्ति वेद जानामि पश्यामि, कथंभूतम्? महान्तमिति, सर्वतो महत्परिमाणवन्तमिति । अथ निराकारस्य व्यापकत्व परममहत्त्व चाकाशवदिति चेन्न । 'अणोरणीयान् महतो महीयानि'ति श्रुतिप्रतिपाद्य स्वव्याप्यानुरूपपरिमाणवन्तमिति, अक्षरब्रह्मणः परममहत्त्वेन तत्र प्रविष्टस्य श्रीहरेः परममहत्त्वम्, तथाविध महान्तमह ब्रह्मस्वरूपः सन् वेद, न त्वब्रह्मस्वरूपः, अथाऽऽदित्यस्थ त सूर्यव्यापक परमात्मानम् आदित्यवर्ण वेद, प्रकाशसभृतत्त्वेन द्योतमानस्य तस्याऽन्धकाराऽयोगेन तमसो मायाऽन्धकारादपि परत्वमुक्तम्, यत्स्वरूपमज्ञानाऽनास्पद सार्वज्ञ्यास्पदमिति अनन्तसूर्यप्रकाशघनस्वरूपमिति त वेद, **एतमिति** समीपस्थ दिव्यमानवस्वरूपश्रीहरिम्, **महान्तमिति** सर्वान्तर्यामिदिव्यश्रीहरिम्, **पुरुषमिति** सूर्यसमतेजस्विनमक्षरधामस्थदिव्यमूर्तिश्रीहरिम्, परस्तादिति सर्वोपरिश्रीहरिमवतारिणमाह श्रुतिरियम् ॥ अथाऽऽत्मतत्त्व ब्रह्मतत्त्व दिव्यदेवपरब्रह्मतत्त्व च ज्ञातृज्ञेययोः साकारत्व चाह—**यदात्मतत्त्वेनेति** । युक्तः—युक्तयोगी भक्तः, 'युक्तस्य सर्वदा भान चिन्तासहकृतोऽपरः' इति न्यायमुक्तावली, सर्वदा नित्यप्रत्यक्षनिभभानवान् कृताभ्यासो यदा परिपक्वदशापन्नः सदेहोऽपि दिव्यदेह इव सिद्धसर्वसिद्धिकः, **इह**ाऽत्र लोके जीवन्नेव दिव्यदृष्ट्या दीपोपमेन दीपवद्घनीभूतेन ज्वालामालाकुलितेन **निजात्मतत्त्वेन** ज्ञात्रात्मकदिव्यज्ञानदृष्ट्या स्वात्मकदृष्ट्या नित्यप्रत्यक्षेण साक्षात्कारेण **ब्रह्मतत्त्वं** स्वान्तर्यामिसाकारतत्त्व व्यापकधामतत्त्व साक्षात्सेवकमक्षरधामात्मकसगुणसाकारतत्त्व तत्र स्थितमजमजन्मान नित्यशाश्वत **ध्रुवं** परिणामादिरहित सदैकमान **विशुद्धं** कर्मकालमायातत्पराभवाद्यशुद्धिरहित साकारमेकानन्दरसघनमेकतत्त्वात्मक चेतनस्वरूप सच्चिदानन्द व्यतिरेकिण शरीरिण नित्यकिशोरमूर्ति स्वरूपसत्साकारानन्दघनैकरस सुमूर्त श्रीहरि सर्वैः शरीरात्मकैर्जडचेतनतत्त्वैर्विशेषणैर्गुणाद्यैश्च यथा श्रुतिवर्णितैः **तत्त्वैस्तस्य** परब्रह्मणो भावात्मकैर्धर्मैः सहितमपि स्वरूपे तदशुद्धिरहित श्रीस्वामिनारायणम् अनादिश्रीकृष्णनारायण श्रीहरिकृष्ण परब्रह्म परमात्मानम्, सर्वान् द्योतयतीति देव सर्वप्रकाशकर सर्वज्ञप्तिप्रद सर्वज्ञ सर्वप्रभासिन सुरूप दिव्य मायिकाकारप्रकाशादिनिरपेक्ष मायिकगुणाऽससृष्टस्वरूप धाम्नि दिव्य देव द्योतमान जानाति साक्षात्करोति तदा, **ज्ञात्वा** तादृशसाक्षात्कारफलं ज्ञातुरस्य युक्तभक्तस्य सर्वैः कर्मकालमायास्वभावदेहवासनादिनिगडैः **पाशैः** मुच्यते, मायिकस्नेहपाशमुक्तो भगवत्स्नेहरज्जुबद्धश्च मोक्ष याति, दिव्यमत्रत्य श्रीहरि तत्रत्य च दिव्य श्रीहरि ज्ञात्वा मुच्यते इति, तथा च धामस्थस्य दिव्यत्व लोकस्थस्य दिव्यत्व प्राप्यस्य तस्य च पुनर्दिव्यत्वं ज्ञात्वा देव प्रपद्यत इति श्रुतेरस्या अर्थः ॥२॥ **यस्मात्परमिति** । दिव्यसाकारोऽपि सर्वाकारः

**ऋग्वेदाऽष्टमेऽष्टके–परात्परतरो ब्रह्म तत्परात्परतो हरिः ॥ ४ ॥ अपाणि-पादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः स वेत्ति वेद्यं न च**

---

श्रीहरिः सर्वान्तर्यामी सर्वशरीरी विशिष्ट तत्त्वमेकमेव नाऽस्मात्पर स्वतन्त्र भिन्नं तत्त्वा-न्तरमस्ति नाऽस्मादपर स्वतन्त्र भिन्न च तत्त्वान्तरमस्ति सर्वात्मकविशिष्टत्वात् सर्वेषामस्य विशेषगत्वात्, अस्याऽग्रेऽन्यस्य स्वतन्त्राऽविशिष्टस्य परस्याऽपरस्याऽभावात्, एव स्वयमेव परमात्मा सर्वाऽणुभ्योऽणु सर्वमहद्भ्यो महदिति श्रीहरेरपेक्षयाऽन्यस्य स्वतन्त्राऽविशिष्टस्याऽणो-र्महतश्चाऽभावात् व्याप्याऽणुमहत्सद्भावात् तदात्मकत्वेन तदतिरिक्तस्य तत्समस्याऽभावात्, तथा च स्वतन्त्रदिव्यशरीरी सुमूर्तः सगुणः स्वय सर्वान्तर्यामी दिव्यसुमूर्तः स्वय सर्वाग्रेऽपि दिव्य-मानवसुमूर्तोऽपि स्वयं सर्वाऽनन्तरमपि महान् दिव्यसुमूर्तः स्वयमेवेति चतुर्धा सुमूर्तदिव्यसाकारा-नन्दघनः स्वय प्रतिपादितोऽनया श्रुत्या ॥३॥ **दिव्यो ह्यमूर्त** इति । दिव्यो द्योतमानः परम-पुरुषः, ह्यमूर्तः मायिकमूर्तिरहितः स्वरूपसन्सुमूर्तः, आनन्दमात्रकरपादमुखोदरादिस्वरूपः एक-तत्त्वात्मकरसघनसुमूर्तः, नाऽस्य निराकारतेजस्त्वम्, पुरुष इत्युक्तेः, पुरि शरीरे शेते उषति, तादात्म्येन स्वानन्दघनमूर्तौ मूर्त्यात्मक एव दृश्यते विद्यते, नाऽस्य पृथग्देहे निवासः, पुरुषा-कारः किशोरमूर्त्यानन्दघनस्वरूपसत्साकार एवाऽय वर्तते, अत्र मन्त्राः'दिव्ये ब्रह्मपुरे यो ह दिव्यमूर्तिः प्रतिष्ठितः । अमूर्तमूर्तेष्वन्तर्यामी मूर्तश्च पर हि तत्' । 'विप्रासो विद्युरत्रपुरुष-मद्वरूपमतिज्ञम् । कमनास्यं कप्याक्ष युगग्रहग पुरुषोत्तमम्' । 'पराणखस्वरुणिम्नीभिर्भ्राजते परि य उद्यः । हृद्रुहृदक्षभ्राकन यमेते सन्तो विदुः' । 'ब्रह्मगवा विविदुरेतमीश्वरीन्दु-प्रभालम् । तिलसुमनोनास नृरूप विभान्तमापूर्णम्' । 'हिरण्यकेशमकुण्ठदृश्य यत्तेऽन्तराऽभितः । किशोरप्रतिम सच्चिदानन्दमयोग प्रेयुः' । 'ब्रह्मपात्राणि ह वै समुपासत श्रेयःखणेयम् । षोडश-कल पत्कजान्तराभ परस्य पूष्णः' । 'कला भवन्तेऽष्टास्वचुल्लेखास्वस्तिकादिका दक्षे । व्योमाऽ-र्धेन्दुशफराद्या दक्षेतरेऽस्य चरणे' । 'एको ह्येपः सर्वयन्ता सुरूपो रूप रूप रूप्यमाणोऽधिशेते । सहस्रधा चाऽप्यथ नान्तधा सन् समानरूपो रूप्यतेऽक्षय्यलोके' । 'पुमकपूर्णेऽपि रतिर्न गुप्ता प्राक्राम्यसेव्येऽपि न रूपतः स्त्री । ग्राह्येऽपि तस्मिन्न हतिः स्ववित्तेर्वियोगयोगेऽपि न तत्त्व-व्याहतिः' । 'अमातृजत्वान्नहि कोषषट्कम् अनन्नकोषान्नहि चित्यचित्यतिः । प्राणः स्वशक्ति-स्तदप्राणकस्य काशोऽपि निरावरणात्मभावः' । 'अनन्नग्रासान्नहि मेहनादिक ततो न गुर्वादि कुतो हि निद्रा । नित्यप्रसन्नस्य कुतोऽप्रसन्नता **प्रेष्ठ्यैक्य**भावान्न परेष्टधीनता' । 'हिरण्यकेशाश्च हिरण्यवन्नखाः सुकुन्ददन्ता नहि योगभागिनः । चिदैकरूपा रमणीयस्वात्मकाः सदैकमानाः प्रविभान्ति तस्य' । 'अगोऽपि गन्ता मनसो जवीयोऽविप्रास एन नाप्नुवन् प्रागुपास्तेः । विप्रेष्ठकोऽन्यानत्येति जवीयः तिष्ठन्नचितिचिति चापि ईशः' । इत्याद्यैः सगुणसाकार एक-रसानन्दघनमूर्तिः किशोरः श्रीहरिः तत्राऽत्र तत्र च दिव्यो वर्णित इति ॥ **ऋग्वेदस्याऽष्ट-मेऽष्टके इति । ब्रह्म** अक्षरब्रह्मपुरुषो धामात्मकः, सः **परात्** प्रकृतिपुरुषात् परा ये

**तस्याऽस्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥ ५ ॥ 'न तत्र चन्द्राऽर्कवपुः प्रकाशते न वान्ति वाता न च यान्ति देवताः । यत्र देवः क्रतुभिर्भूतभावनः स्वयं विभूत्या विरजः प्रकाशते' इति मुण्डके ॥ ६ ॥**

---

मुक्तव्रातास्तेभ्योऽपि पर इति परतरो ब्रह्मधामात्मकः स एव साकारसुमूर्त उक्तः, अक्षरादपि परा ये श्रीहरिमूर्तिगुणा अकानि चमत्काराः सार्वज्ञ्याद्यैश्वर्याणि चेतनानि मूर्त्यात्मकानि, **तत्परात्** तेभ्यः सर्वेभ्यः परेभ्यः, **परतः** कारणावस्थात् स्वस्मात् श्रीहरेरपि अन्वयाऽवस्थाश्च श्रीहरेरपि साकारदिव्यशाश्वतानन्दघनमूर्तिः किशोरो व्यतिरेकी परमात्मा दिव्यः श्रीहरिः सदा साकारो दिव्याकारो भवतीति प्रतिपादयतीय श्रुतिः ॥ ४ ॥ **अपाणिपाद** इति । मायिकपाणिपादरहितः, आनन्दघनागातिरिक्तपाणिपादरहितः, आनन्दघनस्थग्रहणजवनशक्तिमाँश्च सुदिव्यानन्दघनात्मकपाणिपादसहितः, **अचक्षुः**—मायिकचक्षूरहित आनन्दघनागातिरिक्तचक्षुविहीनः आनन्दघनदिव्यप्रकाशचक्षुःसहितो नित्यसाक्षात्कार करोति सर्वं पश्यति दर्शनशक्त्या नित्यसर्वज्ञप्रत्यक्षदर्शीति, **अकर्णः**—मायिककर्णरहित आनन्दघनमूर्त्यंगकर्णसहितो दिव्यकर्णागमूर्तिको दिव्याकर्णनशक्तिमान् सर्वंश्रोतेति, श्रवणदर्शनस्पार्शनरासनघ्राणजादयोऽस्य नित्यप्रत्यक्षात्मका एकसार्वज्ञ्यात्मका एव ततः सर्वेभ्यः सर्वसार्वज्ञ्यमिति नाऽत्र साकर्य भेदप्रयुक्तमनधिकारप्रयुक्त वा **स वेत्ती**ति । परमात्मा दिव्यकिशोरानन्दघनमूर्तिपरमपुरुषः, वेद्यं विशिष्टमविशिष्ट व्यतिरेकि चाऽन्वयि च सर्वमपि वेत्ति पश्यति जानातीति, नाऽन्यः परमात्मनः कश्चिदपि परमात्मवत् वेत्ता नित्यप्रत्यक्षयावदशप्रत्यक्षवेत्ताऽस्तीति, अस्ति चेत् कश्चित् सोऽयमेवाऽस्ति नाऽपर इति । **तमाहुः**, श्रुतयः सार्वज्ञ्यमूर्तयः सरस्वत्य एव, तम् , धामगतदिव्यं मानववेषदिव्य पुनश्चान्तर्यामिदिव्यं व्यतिरेकिदिव्य चेति श्रीहरिमेव, आहुः वर्णयन्ति स्म । **अग्र्यम्** अनादिव्यतिरेकिदिव्यकिशोरपरमपुरुषम् , **महान्तम्**—अणुष्वणुस्वरूप महत्सु महत्स्वरूप यथापात्रस्वरूपं व्यापकमन्तर्यामिणम् , **पुरुषम्**—दिव्यसाकारानन्दघनकिशोरैकरसचेतनमूर्तिपुरुषम् , मानवदिव्यस्वरूप चेति । प्राहुः-वर्णयन्ति स्मेति ॥ ५ ॥ **न तत्रेति** । मुण्डकोपनिषदि प्रोक्तमेतत् ,—**तत्रा**ऽक्षरब्रह्मलोके, चन्द्रार्कवपुषां मायिकाना प्रकाशो नास्ति, मायिकप्रकाशस्य तदग्रेऽप्रकाशत्वात् । तत्राऽक्षरब्रह्मलोके मायिकवाताना वान नास्ति सच्चिदानन्दमुक्तात्मा चेतनो वानात्मा तथाशक्तो वर्तत इति । तत्राऽक्षरब्रह्मलोके मायिकदेवतात्मना गतिर्नास्ति मुक्तात्मनामेव साकाराणां गतिरस्तीति । यत्राऽक्षरब्रह्मलोके दिव्यो देव एकः श्रीस्वामिनारायण एव दिव्यकिशोरः सर्वज्ञानशक्तिबलैश्वर्यवीर्यतेजोभिः प्रकाशमानो विराजते, क्रतुभिः पूजाभिश्च पूज्यमानो विराजते, 'यज्ञेन यज्ञमयजन्त देवाः' इति मन्त्रोक्तैर्यज्ञैरिज्यमानः समास्ते, स्वयं परमपुरुषः स दिव्य आनन्दघन एव निजमूर्त्या विशिष्टमूर्त्या शरीरैर्भूताना सृष्टीना भाविना सृष्टिप्रकाण्डाना च भावयिता कर्ता, विशिष्टया भूत्या स्वीयसामर्थ्याऽन्वितशरीरात्मकजडचेतनतत्त्वा भूतसृष्टिस्वरूपो भावितसृष्टिस्वरूपो

'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः, तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती'ति ॥७॥ 'योऽक्षरे तिष्ठन्नक्षरमन्तरो यमक्षरं न वेद यस्याऽक्षरं शरीरं योऽक्षरमन्तरो यमयति' ।८।

अत्राऽयं पुरुषः स्वयंज्योतिः ॥ ९ ॥ हरेर्न प्राकृतदेह—

इत्युक्तं भारते—'न भूतसंघसंस्थानो देहोऽस्य परमात्मनः' ।

---

भाव्यमानसृष्टिस्वरूपश्च भूयमानः प्रकाशते सञ्चरति सञ्चारयति च, तत्र तस्य रजआत्मक-मायापेक्षा नास्तीति प्रोक्तः **विरज** इति । प्रवृत्ते. स्वस्य नित्यगुणत्वान्मायाराजसापेक्षाभावात् । अनया श्रुत्याऽक्षरधाम्नि शाश्वतसाकारदिव्यकिशोरमूर्तित्व भूतभावनसृष्टिगतदिव्यसाकारमूर्तित्व पुनश्च दिव्यक्रतुकाण्डेज्यमानदिव्यसाकारमूर्तित्व च श्रीहरेः प्रतिपादितम् ॥ ६ ॥ **न तत्रेति** । तत्राऽक्षरब्रह्मलोके श्रीहरिप्रकाशात्मके नान्यसूर्यचन्द्रतारकविद्युदग्नीना मायिकाना प्रकाशाः प्रभवन्ति स्थातुमपि, किन्तु नित्यप्रभाप्रकाशित तं श्रीहरिमनु तत्तेज. सगृह्य सर्व ब्रह्म मुक्त-मण्डल सृष्टिमण्डलमात्ममण्डलादि च प्रभाति, प्रकाशवत्तया भाति सजातीय च प्रकाशयति, न्यून वा परतः प्रकाश प्रकाशयति, **तस्य** परमात्मन. भासा प्रकाशेन सर्वमिद सृष्टिमण्डल विशेषेण भातीति सप्रकाश दृश्यते, तत्प्रकाशेन स्वदर्शन सम्पादयतीति दिव्यमूर्तिस्तत्राऽत्र च पुनस्तत्र वर्णितः ॥ ७ ॥ **योऽक्षरे** इति । अक्षरे धाम्नि प्रकाशात्मके सुमूर्ते सेवके च ब्रह्मणि शरीरी सन्नन्वयी सन्नन्तर्यामी सन् श्रीहरिस्तिष्ठति, अतोऽक्षरब्रह्मान्तरात्मा प्रोच्यते, दिव्यान्त-रात्मान श्रीहरिं स्वान्तःस्थित त सदा वेत्त्यपि यदाऽक्षरमपि स्वस्मिन् तिरोभावयित्वा स्वराट्तयावर्तेत तदा तमक्षरमपि न वेद, यद्वाऽक्षरस्य प्रकाशतन्वात्मकस्य प्रकाशेनरसर्वविधासु त श्रीहरिं वेदितृत्वेऽपि ततोऽप्युर्वरितत्व श्रीहरेरिति धामाऽक्षरवेदनोर्वरितत्वमेव विशिष्यते नानुर्वरितत्व येन वेदनाऽन्तो भवेदिति, यस्य परब्रह्मणोऽक्षरब्रह्म शरीरमिति, तस्मिन् शरीरे शरीरी तदन्तरोऽन्तर्यामी च तन्नियामको यथेष्ट नियमयति, अनन्तसृष्टिजननलयार्थं यथा प्रेरितमक्षरब्रह्म पुरुष प्रकृतीश प्रेरयतीति अक्षरद्वारा परमपुरुषोऽक्षरातीतः प्रेरको भवतीति स प्रेरकः सगुणः साकारो दिव्यः सृष्टावपि धृतमानवाकारो दिव्य. पुनश्चाक्षरस्थः स एव शाश्वतो दिव्य इति समावेदितमनया श्रुत्या ॥ ८ ॥ **अत्राऽयमिति** । अत्राऽक्षरधामप्रकाशे हृदयदहरे च योऽय पुरुषोत्तम. परमपुरुषः परमात्मा साकारदिव्यविग्रहः सः स्वयज्योतिः स्वाभाविकशाश्वतप्रकाशी स्वान्येभ्यः प्रकाशदाता च सुसमुज्ज्वलद्योतमानदिव्यकिशोराऽऽनन्द-घनमूर्तिर्वर्तते ॥ ९ ॥ अस्य श्रीहरेर्धर्मजस्य न प्रकृतितत्त्वजन्यदेहोऽपि तु सच्चिदानन्दघनै-करसैकतत्त्वसाकारमूर्तिरेव स्वरूपसत्साकारो वर्तते । इत्युक्तं महाभारते—'अस्याऽत्र प्रकटी-भूतस्य धर्मजस्य परमात्मनः श्रीहरेः प्रत्यक्षविषयस्याऽस्मत्समानस्य प्रभोर्देहः स्वस्वरूपमूर्तिर्न भूताना पृथिवीजलतेजोवाय्वाकाशाना यः शान्तघोरमूढतात्मकविशेषसघातपिण्डस्तस्य ये

**‘भागवतैकादशे’ ‘नस्योतगाव इव यस्य वशे भवन्ति ब्रह्मादयस्तनुभृतो मिथुरर्द्यमानाः । कालस्य ते प्रकृतिपूरुषयोः परस्य शं नस्तनोतु चरणः पुरुषोत्तमस्य’ ॥ १ ॥ भागवतपञ्चमस्कन्धे—अर्हसि मुहुरर्हत्तमार्हणमस्माकमनुपथानां नमो नम इत्येतावत्सदुपशिक्षितं कोऽर्हति पुमान् प्रकृतिगुणव्यतिकरमतिरनीश ईश्वरस्य परस्य प्रकृतिपूरुषयोरर्वाक्तनननामरूपाकृतिभिः कर्तुं स्वरूपनिरूपणम् ॥ २ ॥ गीतायां ‘जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन’ ॥ ३ ॥**

---

संस्थानाः संयोगा अवयवसन्धानास्तत्समवायिसमवेतो देहोऽपि तु स्वरूपसन्नित्यानन्दघनमूर्तिरेकतत्त्वात्मकसुमूर्त एव स्वरूपसत्साकार इति । अनेन दिव्यमूर्तेर्हरेर्दिव्यमानवमूर्तित्वं स्वरूपसतीमूर्तित्वं च ततो धाम्न्यपि तन्मूर्तित्वमेवेत्यावेदितम् । भागवतैकादशे—**नस्योतगाव** इति । नसि रज्ज्वा ओता गावो वृषभा इव स्वामिनो यस्य परमात्मनोऽवतारधर्तुः साकारमूर्तेर्वशे ब्रह्मादयस्तनुभृतोऽत्र भवन्ति, ते कथं तस्य वशे ? यतः कालस्य वशेऽर्द्यमाना मिथोऽतिपराभवमापन्नाः शरणं मार्गयन्तोऽत्र कालकालं प्रकृतिपुरुषपरं श्रीहरिं शरणं यान्ति, तस्य दिव्यमूर्तेः पुरुषोत्तमस्य दिव्यचरणयुगलं नोऽस्माकं देवानां **शम्**—कालदुःखातिरेकिणीं शान्तिं तनोतु । अत्र चरणौ दिव्यमानवमूर्तिज्ञापकः, प्रकृतिपुरुषपरस्येति धामस्थदिव्यमूर्तिज्ञापकम्, पुरुषोत्तमस्येति शाश्वतदिव्यमूर्तिज्ञापकम् । **भागवतेति** । **अर्हसीति**—हे अर्हत्तम ! पूज्यतम ! परमात्मन् !, मुहुर्मुहुरर्हणमर्हसि, अस्माकं तवाऽनुपथानाम् अनुवर्तिनां भक्तानां ते नमो नमः, नमस्करणात्मिका भक्तिरेवाऽस्माभिरुपशिक्षिता, नान्यद् विद्मो वयम्, प्रकृतेर्मायाया गुणैः व्यतिकरा व्याप्ता मतिर्यस्य तादृशः कः पुमान् अनीशोऽसमर्थो ज्ञातुं वर्णयितुं च त्वां तव गुणांश्च, तादृशः कः पुमान् प्रकृतिपुरुषयोः परस्य परमेश्वरस्य तव दिव्यमूर्तेः, अर्वाक्तनैः निम्नदशास्थितैर्मायिकैर्नामरूपाकृतिभिर्वर्णितैरपि, तव स्वरूपस्याऽऽनन्दघनसाकारकिशोराऽवतारिणो निरूपणं कर्तुम् अर्हति, न मायिकैरमायिकवर्णनं कर्तुं कोऽपि समर्थ इति । तथा च त्वम् अमायिको दिव्याकारः शाश्वतोऽवतरणात्मकनरनाट्येऽपि शाश्वतदिव्यमानवाकारः पुनरेव धामगोऽतिदिव्यमूर्तिरे’वेति दिव्यस्याऽदिव्यनामरूपाकृतिभिर्वर्णनमयुक्तमेवेति । यदि वर्ण्यते यैर्वर्ण्यते तानि नामरूपाकृत्यादीनि शाश्वतदिव्यान्येवेति सिद्ध्यन्ति ॥ २ ॥ **गीतायाम्—‘जन्म कर्म चे’ति** । मे मम परब्रह्मणो दिव्यस्य दिव्याकारस्य, जन्म ब्रह्माण्डे प्राकट्यम्, कर्म व्यापारचेष्टादि, दिव्यतनोर्दिव्यमेव, दिव्यत्वं द्योतमानमूर्तित्वम्, आनन्दघनमात्रप्रकाशितकिशोरस्वरूपसत्साकारत्वम् । यो ज्ञाता जिज्ञासुरेव धामगं भूमिगं च दिव्यं दिव्यगुणोपेतं दिव्यकर्माणमित्यपि चेद् वेत्ति केवला-

**स्कन्दपुराणे–आत्माऽऽत्मा चाऽक्षरात्मा च ह्येष आकाशनिर्मलः। दिव्य-दृगीद्यः सन्मात्रः पुरुषो वसुदेवजः ॥४॥ प्राधानिका गुणा यत्र त्रयोऽपि रजआदयः। न भवन्त्यल्पमपि यत् कालमायाभयं न च ॥ ५॥**

---

नन्दघनतत्त्वात्मकैकरसघनमूर्ति मा वेत्ति, तस्य भौतिकदेहत्यागोत्तरं न भौतिकदेहयोगि पुनर्जन्म किन्तु स्वरूपसत्साकारचेतनाविर्भूतदिव्यसारूप्यभावापन्नसौम्यदिव्यमूर्तिसमभिनिष्पन्नतात्मक-मुक्ताविर्भाव एवेति। ज्ञानघनपिण्डाविर्भावः स्वरूपसदाविर्भावः सलिलस्य घट्टहिमाविर्भाववत् ज्ञानस्य ज्ञातृघट्टाविर्भावपिण्डदिव्यसाकारमूर्तिभगवत्सारूप्याविर्भावमुक्तताऽवाप्तिरिति तादृशः सन् मामेतीति मामेत्य तथाविधः स्वरूपसत्साकारघट्टपिण्डज्ञानघनमूर्तिः सर्वशक्तिगुणाद्य-गाद्यभिनिष्पन्नः सम्पद्यत इति ॥ ३ ॥ **स्कन्दपुराणे आत्मात्मेति**। सर्वेषामात्मना-मात्माऽन्तर्यामी प्रेरकः सञ्चालकः फलप्रदाता साक्षी चाणुस्वरूपसुमूर्तोऽनन्तस्वरूपः परमात्मा, आत्मानो जीवेश्वरमुक्ताः, अक्षरस्य ब्रह्मणो मूर्तस्य प्रकाशधाम्नश्चाऽऽत्माऽन्त-र्यामी प्रेरकः सञ्चारकः सुमहान् सुमूर्तो यथापेक्षस्वरूपः परमात्मा, स एषोऽक्षरस्थो धामस्थोऽत्र लोके च मानवाद्याकारस्थितो दिव्यमानवस्वरूपो भौतिकमायिकभोगपरायणोऽ स्मदनुकूलस्वरूपव्यापारोऽपि गगनवन्निर्लेप आकाशसमनिर्मलः स्वच्छो यस्मिन्मायाकर्म-वासनाविपाकमालिन्य नास्तीति, आकाशादप्यात्मज्ञान निर्मल ततोऽप्यात्मा निर्मलस्ततोऽ प्यक्षर निर्मल ततोऽप्यक्षरातीतोऽय भगवान्निर्मलो निर्मलत्वपराकाष्ठापन्न इति सर्वनैर्मल्य-प्रदोऽस्यैवाऽन्यानि नैर्मल्यानि मात्रामनुगृह्णन्तीति । प्रतिबिम्बग्राहित्वशक्तयः सर्वा अस्यैव परमात्मनः, सर्वाः प्रभाः सर्वाणि तेजांसि सर्वे प्रकाशाः सर्वे चिदाकाशाः सर्वाणि चैतन्यान्य-स्यैव परमात्मनस्तत्तन्मात्रामुपजीवन्तीति। आ समन्तात् काशते प्रकाशते इत्याकाशो दिव्य-प्रकाशस्तद्वान् अत एवाऽप्रकाशात्मकमलरहितः स्वच्छतम इति। **दिव्येति**। दिव्या धाम-मुक्ताना या दृष्टिर्नित्यसाक्षात्कारस्तथाविधसाक्षात्कारात्मकाऽपरोक्षानुभवेनाऽऽलोचनविषयः प्रत्यक्षमूर्तिः, **सन्मात्रः**—सच्चिदानन्दानन्दघनमात्रमूर्तिः, असद्व्यावृत्त्यर्थं सदिति, नाऽभाव-मूर्तिः किन्तु भावमूर्तिः, निरुपाख्यं यदसत् तन्न, विनाशि जन्य च यदसत् तन्न, परिणामि विवृत्तं च यदसत् तन्न, किन्तु शाश्वतमेकमान दिव्यं यत् सत्तायोगि सत् तत् परब्रह्मेति। एतादृशं परब्रह्म पुरुषः, किशोरदिव्यानन्दघनसुरूपमूर्तिर्नरनाट्यधरा नित्यनरः नित्यो नरोत्तमः पुरुषोत्तमो दिव्यपरमपुरुषः परमात्मा स एव, स चात्र भूतले वसमानो देवो दिव्यावतारी जनिमानिव लक्ष्यते इत्यर्थं वसुदेवजः इति, स च धर्मजः श्रीहरिः, यद्वा वसुदेवो यो धर्मजन्या वसुद्रोणाख्यो देवस्तस्य सुनो वसुदेवजोऽनादिश्रीकृष्णनारायणो गोपालात्मजो गोपालो दिव्यमानव-स्वरूपः परमात्मा सर्वात्मा ब्रह्मात्मा परब्रह्मेति पुनर्दिव्य एव स. इति दर्शितः ॥ ४ ॥ तस्य दिव्यत्वेऽस्य दिव्यत्वे च प्रधानमायाया ये रजस्तमःसत्त्वगुणा गुणयोगाश्च ते, **यत्र** यस्मिन् दिव्ये परमात्मनि चाक्षरेशे मुनीशे गोपीशे च न सन्ति, न च तस्मिन् अल्पमपि कालस्य

**सहोदिताकर्ऽयुतवद्भास्वरे तत्र तेजसि। वासुदेवं ददर्शाऽसौ रम्यदिव्याऽसिताकृतिम् ॥६॥ भगवँस्त्वत्प्रसादेन तमहं परमेश्वरम्। वासुदेवं समालोके स्थितमक्षरधामनि ॥७॥ तेजःपुञ्जाभिरुद्धाङ्गो गुणातीताऽद्भुताकृतिः। अखण्डानन्दरूपश्च सदा शुद्धोऽच्युतोऽस्ति सः ॥ ८ ॥ कृष्णस्याऽनुग्रहो यस्मिन् स तेजसि तमीक्षते। केवलं तेज एवाऽन्ये पश्यन्ति न तु तं मुने ॥ ९ ॥**

---

संहारेण जन्य मायायाः पराभवेन जन्य भयं नास्ति, भय तु स्वरूपान्यथाभावेऽनिष्टे स्यात्, तत् तत्र श्रीहरौ नास्ति, यथेष्टे तु सत्फले किमपि भय नास्ति, तर्हि सत्यसकल्पे सत्यकामे कथ भवेत्, अक्षरमुक्तानामक्षरस्य च भय नास्ति तर्हि कथ स्यादक्षरातीतस्य सर्वगुणसामर्थ्यैश्वर्यशक्तिबलवीर्यतेज.सभृतस्य भयमिति, तथा च मायागुणरहितो नित्यनिजदिव्यगुणः सगुणः साकारो दिव्याकारकिशोरनटवरमूर्तिरानन्दघनः परमात्मा धृतमानवदिव्यवेषोऽपि पुनर्दिव्य एवेति ॥ ५ ॥ **सहोदितेति**। अर्काणामयुते सहोदिते घट्टस्तरापादके महाप्रकाशे निरन्तरे या घनता ततोऽतिगा घनता भगवदेककिरणप्रकाशे, ततोऽनन्तधा भास्वरे **तत्रा**ऽक्षरधामात्मकतेजसि असौ नारदः श्रीवासुदेव रम्यदिव्यकृष्णाकृतिम् अनादिश्रीकृष्णनारायण श्रीगोपालबालं ददर्श, दिव्य परमपुरुष दिव्य च नन्दसुत पुनर्दिव्याकारकिशोर ददर्श घनश्याम श्रीहरि परवासुदेव श्रीहरिकृष्णभगवन्त ददर्श। एतन्निरूपित प्राक् ॥ **भगवन्निति**। हे भगवन् हे रामानन्दमुने! त्वत्प्रसादेन त श्रीघनश्याम दिव्यमानवस्वरूपवेषमपि वासुदेवमनादिश्रीकृष्णनारायणदिव्यस्वरूप परमेश्वरम् अक्षरधाम्नि स्थित पुनरत्र च स्थित दिव्यवेष समालोकेऽहम् ॥७॥ धाम्नि यो दृश्यते दिव्यस्वरूपस्तमाह—**तेजःपुञ्जेति**। तेजसा पुञ्जैः समूहितस्तैरभितो निरुद्धानि निविष्टानि लग्नानि नि.सरत्तेजःपुञ्जयुक्तानि सर्वागानि यस्य सः, गुणेभ्यो मायिकगुणेभ्योऽतीताऽलिप्ता दिव्याऽद्भुताऽऽकृतिर्वेषो यस्य सः, मायिकगुणरहितो दिव्यसगुणः, अखण्डित एकरसो य आनन्दस्तद्रूप आनन्दघनमूर्तिः स्वरूपसदानन्दघनकिशोरमूर्तिः, सदा—शाश्वतः, शुद्धः—परिच्छिन्नतापराभवोऽशुद्धिस्तद्रहितः, सर्वविधपरिच्छेदरहितः, एकत्वेऽप्यानन्त्यात्, **अच्युतः**—न च्यवते विपरिणमतेऽगेन दन्तादिना वियुज्यते केशेन वा चर्मस्फीतेन वा न वियुज्यते तादृशः, क्षरणेनाऽणुना वा न वियुज्यते, शाश्वतसमस्वरूप इति दिव्यो धाम्नि सृष्टावपि दिव्यः पुनश्च शाश्वतदिव्यस्वरूप एवेति ॥८॥ **कृष्णस्येति**। श्रीहरिकृष्णभावतोऽनुग्रहः कृपा स्वदर्शनदानेच्छा यस्मिन् तेनैव तत्राक्षरधामात्मकतेजसि स भगवान् दिव्यस्वरूप ईक्ष्यते, अकृपापात्र तु चात्मदर्शनाभ्यासवान् समाधिसाधनेनापि केवल तेज एव दिव्यमूर्तिप्रकाशमेव व्यापक धाम पश्यति, एवमन्येऽपि आत्माभ्यासिनः केवल तेज एव निराकारम्, सुमूर्तकिशोरदिव्यवेष तु न, पश्यन्ति, त साकारदिव्यं नैव पश्यन्तीति, हे मुने! सद्गुरो! विना साकारोपासना नानुग्रहस्त विना च न दिव्यदर्शनमिति, तथा च सदा दिव्योऽक्षरधामस्थो भगवानयमत्रस्थोऽपि तत्रस्थो दिव्यवेष एवेति ॥९॥

**ज्वालामालोपरुद्धांऽगी निष्ठा सा योगिनां परा ( पश्यन्ति ) ॥ १० ॥ पुरुषप्रकृतिकालब्रह्मादीनां स्रष्टृत्वात् कर्तारं परमपुरुषं च तैरनन्तकोट्यण्डोत्पत्त्यादिकारयितृत्वादकर्तारं वदन्ति श्रुतिस्मृतयः । कौषीतकी श्रुतिः— यो वै वा लोके एतेषाम् । पुरुषाणां कर्ता यस्य चैतत् कर्म स वै वेदितव्यो विश्वस्य कर्ता भुवनस्य गोप्ता अत्राऽयं पुरुषः स्वयंज्योतिः । यतो वा इमानि भूतानि जायन्ते ॥ २ ॥ स वा अयमात्मा सर्वस्य**

---

**ज्वालामालेति ।** ज्वालना प्रकाशाना या असख्या मालाः स्तरास्तैः उपरुद्धानि निःसरद्व्याप्तानि सर्वांगानि यस्याः सा मूर्तिरीदृशी दिव्या परमात्मनाऽस्तीति, सदा दिव्यसाकारो वर्णितः प्राङ्निरूपितमेतत् ॥ १० ॥ **पुरुषेति ।** पुरुषो प्रकृत्यधिष्ठाता मुक्तः प्रकृतिपुरुषः, प्रकृतिर्माया, कालः कालपुरुषः, ब्रह्मादयश्चेश्वराः, तेषा स्रष्टा समुद्भावकः परमात्मा, अत एव तेषा परिणामकर्ता परमपुरुषः श्रीहरिः, तैः पुरुषप्रकृतिकालब्रह्माद्यैः करणैरनन्तकोट्यखण्डसृष्टिसमुद्भवपोषणसहरणकर्तृत्वात् तद्द्वारा कारयितृत्वाच्च कर्तारमप्यकर्तार श्रुतिस्मृतयो वदन्ति, ब्रह्माण्डादिकर्तृत्व यदि शरीरे, तदा शरीरिणि स्वस्मिन् कारयितृत्वम्, विशिष्टस्य तु कर्तृत्वम्, अथ **कौषीतकी श्रुतिः—यो वै** इति । यः परमात्मा दिव्यस्वरूपः, सृष्ट्यादौ, एतेषा पुरुषाणा कर्ता,—मायापुरुषयोः प्रधानपुरुषाणाम्, महदादितत्त्वेश्वराणाम्, ब्रह्मादीना च सयोजननिष्पादयिता, साकारवेषप्रदाता पिण्डाद्याधाननियन्ता, यस्य दिव्यसाकारपरमात्मनस्तेष्वन्तर्यामिणः साकारस्वरूपस्य, ब्रह्माण्डसञ्चालकयोजनादि कर्म, स वै परमपुरुषो दिव्यो विश्वस्य कर्ता स्रष्टा गोप्ता सहर्ता च, भुवनेषु स्थाता, अत्र सृष्टौ च, अय परमात्मा परमपुरुषः, दिव्यस्वयज्योतिःप्रकाशवान्, स वेदितव्यः, अक्षरे धाम्नि दिव्यकिशोरः, सृष्टावत्रापि दिव्यकिशोरः, अन्तर्याम्यपि दिव्यकिशोरो वेदितव्य इति, एतद् वेदन मोक्षसाधनम् । श्रुतिराह—**यतो वेति ।** यस्माद् दिव्यकिशोरमूर्तेः श्रीहरेः विशिष्टात्मककारणात् अविभक्तनामरूपसूक्ष्मावस्थकारणात् विशिष्टात्परब्रह्मणः वा निश्चिततया, इमानि भूतभौतिकानि जडचेतनाऽऽयोजनानि ब्रह्माण्डान्यपि देहधारिणश्चापि महान्तोऽणवश्चापि जायन्ते निष्पद्यन्ते प्रकटीभवन्ति, तत् जगजन्मादिकारण परब्रह्म स्वरूपसत्साकारानन्दैकरसघनकिशोरवेष बोध्यमिति ॥ २ ॥ **स वेति ।** सः धामस्थपरमात्मा दिव्यकिशोरमूर्तिस्वरूपोऽप्यत्र मानववेषो दिव्यो भगवान्, आत्मा सर्वात्मा सर्वान्तर्यामी, सर्वस्य स्वेतरस्य वशकारकः, सर्वस्य स्वेतरस्य ईशानो नियामकः, सर्वस्य स्वेतरस्याऽधिपतिरन्तर्यामी पालनरक्षणकरः, सर्वमिद स्वेतर सूक्ष्मं स्थूलं जडं च चेतन प्रशास्ति नियमयति यदिद दृश्यमदृश्यम् अन्तिक दूर च सृज्यम् असृज्यं च, किच—किमपि नामरूपार्ह नामरूपानर्ह भावात्मक भावभिन्न च, तत्सर्व स परमात्मा शासनशक्तः शास्ता शास्ति, स चाक्षरधामस्थो दिव्योऽपि धृतमानववेषकिशोरदिव्यानन्दघनमूर्तिः सन्नत्र सृष्टौ साधुना पुण्यकर्मणा न भूयान् वर्धते विशेषसुखी भवति,

**वशी सर्वस्येशानः सर्वस्याऽधिपतिः सर्वमिदं प्रशास्ति यदिदं कि च, स न साधुना कर्मणा भूयान्, नो एवाऽसाधुना कर्मणा कनीयान्, एष भूतानामधिपतिरेष लोकेश्वर एष लोकपालः स सेतुर्विधरण एषां लोकानामसंभेदाय ॥३॥ यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषमिति ।४। तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् । पति पतीनां परमं परस्मात् विदामहे देवं भुवनेशमीड्यम् ॥५॥ प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः ॥६॥**

---

अनपूर्णत्वात्, स एव च नाऽसाधुनाऽपुण्यकर्मणा कनीयान् विशेषसुखशून्यतया दुःखवान् भवतीति, अपूर्णत्वाऽभावात्, असामर्थ्याऽभावात्, अस्याऽऽनन्दमात्रया स्वेतरेषामानन्दित्वाच्च, नित्यशाश्वतानन्दस्वरूपसद्घनमूर्तित्वाच्च । एष एव दिव्यः परमात्मा सर्वेषा भूतानामधिपतिः एष एव परमात्मा सर्वेषा लोकानामीश्वर. शास्ता, एष एव परमात्मा सर्वेषा लोकाना पालकः पोषणकर्ता, रसदाता, रससम्भृतत्वेन रसदातृत्वमस्य घटते, सोऽयमेव परमात्मा एषा लोकाना सेतुर्मर्यादारक्षकः, सेतुरिव स्थितिनियामकः, स एव परमात्मा दिव्यसाकारानन्दघनमूर्तिः स्वयं सर्वेषा लोकाना स्थित्यै यथाकालम् **असम्भेदाय** कालकर्ममायास्वभावादिभिः स्वतन्त्रकृतपराभवनिवृत्तये यथावस्थित्यै **विधरणः**—धारणशक्त्याश्रयः, स्वशरीरे यथावस्थिततया सर्व धारयतीति नियमयतीति, पालयति पोषयति रक्षयति च शरीरद्वारा, पाति पुष्णाति रक्षति च साक्षादनुप्रवेशेनेति सर्वथा सर्वधारणकर्ता वर्तते, अत्र व्यतिरेकी साकारोऽन्वयी साकारः स्वतन्त्रसाकारः सर्वथा साकारश्च वर्णित· ॥ ३ ॥ **यदा पश्य** इति । यदा पश्य उपासकोऽभ्यासेन लब्धदिव्यदृष्ट्या रुक्मवर्ण सुवर्णभास्वरोज्ज्वलमूर्ति सर्वकर्तार सर्वागसम्पन्न सर्वनियामक परमेश्वर परमपुरुष पश्यतीति तदा मुक्ति सारूप्या लभते, अत्र धामस्थस्याऽन्तर्यामिणोऽग्रे मानववेषस्थितस्य च दिव्यकिशोरमूर्तित्व दर्शितम् ॥ ४ ॥ **तमीश्वराणामिति** । सर्वेषामीश्वराणा प्रधानपुरुषादीना य ईश्वरः ईशनशीलः प्रकृतिपुरुषस्तस्येशनशीलमक्षरब्रह्म तस्यापि ईशनशीलः परममहेश्वरः परमात्मा, सर्वेषा ब्रह्मादीना देवाना दैवत वैराजपुरुषस्तस्य दैवतं भूमा पुरुषस्तस्य दैवत वासुदेवनारायणस्तस्यापि दैवतमक्षर धाम तस्यापि परमदैवत परमात्मा श्रीहरिः, पतीना स्वामिना सर्वेषा स्वामी यदक्षरं ब्रह्म तस्यापि परमः पति. परमात्मा श्रीस्वामिनारायणो भुवनाना सर्वेषामीशोऽनादिश्रीकृष्णनारायण ईड्यः सर्वेषा स्तुत्यः पूज्यो ध्येयश्च दिव्यो द्योतमानो देवो हरिकृष्णो महाराजो धाम्नि दिव्यसाकारः सृष्टावपि दिव्यसाकारः पुनः सर्वत्र सर्वथा दिव्यमूर्तिस्त पुरुषोत्तम परमपुरुष **विदामहे**—वेदनपूर्वकं चोपास्महे ॥ ५ ॥ **प्रधानेति** । प्रधानमायाया मूलमायायाः क्षेत्रज्ञाना चात्मना च पतिः परमपुरुषः, सर्वजडचेतनगुणानामीशः पतिः परमपुरुषः, ससारस्य मोक्षस्य स्थितेः बन्धस्य च कर्मफलप्रदानद्वारा परम्परया हेतुः प्रयोजकः परमपुरुषः स मोक्षगो दिव्यः सृष्टिगो दिव्यः सर्वत्र दिव्यमूर्तिरिति बोध्य इत्यभिहितः ॥ ६ ॥

**हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ॥ ७ ॥ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ ८ ॥ भीषाऽस्माद् वातः पवते भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥ ९ ॥ स्कान्दे वासुदेवमाहात्म्ये—परब्रह्म ॥ १ ॥ सकार्यमूलप्रकृतिः सकालाऽक्षरे तेजसि प्रकाशेऽर्कस्य रात्रीव तिरोभूता**

---

**हन्ताऽहमिति** । हन्त इति स्वीकारे, अह परमपुरुषो दिव्यपरमात्मा, इमा मत्सृष्टास्तिस्रो देवताः दिव्यपुरुषा जीवात्मान ईश्वरात्मानः प्रकृतिपुरुषादिब्रह्मात्मानश्च तान् प्रविश्य स्वात्मना प्रविश्य नामरूपे करोमि, एव—इमास्तिस्रो देवताः पृथिव्यप्तेजांसि अप्तेजोवायून्, तेजोवाय्वाकाशान्, देहेन्द्रियाऽन्तःकरणानि, तत्र तत्राऽनेनाऽधिष्ठात्रा प्रवर्तकेन सञ्चालकेन चेतनेन जीवाद्यात्मवर्गेण द्वारेण जीवात्मशरीरेण मया, जडेषु चेतनद्वारा तदनुप्रविश्य 'रूप रूप प्रतिरूपो भूत्वा, साक्षी भूत्वा, अन्तर्यामी भूत्वा, अन्तर्नियन्ता भूत्वा, पिण्डादिविशिष्टान् नामरूपयोग्यान् नामरूपव्यवहार्यान् स्थूलान् कर्मारूढान् ममाहभावान्वितान् सक्रियव्यापारफलाढ्यान् प्रवर्तकान् करोमि', इति । अत्र सगुणसाकारदिव्यश्रीहरेः सृष्टावपि साकारदिव्यमूर्तिस्वरूपेण प्रवेशः पुनश्च शाश्वतदिव्यभावो बोधित. ॥ ७ ॥ **यो ब्रह्माणमिति** । यः परमपुरुषः परमात्मा साकारदिव्यमूर्तिः, सः परम्परया ब्रह्माण सुपिण्ड सुज्ञ सचेतन सृष्ट्वा पूर्वं प्रागेव तस्मै ज्ञान वेदात्मक बहुज्ञत्वं सार्वज्ञ्यकल्प प्रददौ प्रकाशयामास, त ज्ञानप्रकाशसम्पादयितार दिव्य देवं सर्वात्मबुद्धिप्रकाशकरमन्तर्यामिण साक्षिणमपि च दिव्यमूर्तिं श्रीहरि मोक्षेच्छयाऽह शरण रक्षणार्थं मोक्षार्थं च प्रपद्ये । अनेन धामगतदिव्य मानवदिव्य पुनर्दिव्य परब्रह्म स्वरूपसत्साकारम् आनन्दघनमूर्तिस्वरूप दर्शितम् ॥ ८ ॥ **भीषाऽस्मादिति** । अस्मात् दिव्यस्वरूपान्नियामकात्परमात्मनोऽनाज्ञापालने सति भयम्, तेन भयेन भीषा, वातः पवनः तदीश्वराधिष्ठितो वायुः पवते यथायोग्य समुपयुक्तो वहते, सूर्यश्च तेन परमात्मना प्रकाशार्थं प्रयोजितोऽनाज्ञाकरणे या भीतिस्तया भीषा, यथाक्षणमुदेति नियमे वर्तते, तदधिष्ठातृदेवनियुक्तो विहरति, अग्निदेवः पाचयति, इन्द्रदेवो वर्षति, सङ्ख्यया पञ्चमो मृत्युदेवश्च स्वकार्ये धावति पञ्चभूतेषु मीलनकृत्त्वादपि पञ्चम इत्युक्तिः, एतत्सर्वसञ्चरण परमात्मना कारित तत्तद्देवैर्निर्वाह्यते, अत्राऽन्तर्यामी तत्र तत्रस्थश्च सुमूर्तो भगवान् दर्शितः ॥ ९ ॥ स्कान्दे—**परब्रह्मेति** । स परमात्मा परब्रह्म व्यापकोऽपि व्यतिरिक्तोऽप्यन्वितोऽपि धृतमानवादिवेषोऽपि दिव्यसुमूर्त एवोक्त इति ॥ १ ॥ तथा स परमात्मा साकार एव कारणात्मकः कार्यात्मकश्च विशिष्ट एव मूलमेव प्रकृतिरेव कार्यात्मकशरीराऽभेदेन प्रोच्यते, सर्वेषां शब्दानामन्ततः परमात्मनि पर्यवसानात्, तथा च शरीरी स साकार एवेति । स च **कालः** कालकालः कालस्य कलनः कालशरीरः काल उच्यते, कालपुरुषः सः, सकल्पात्मकमहाकालपुरुषः सः,

तदाऽभवत् ॥ २ ॥ सिसृक्षाऽथाऽभवत् तस्य ब्रह्माण्डानां यदा तदा । सकालाऽऽविर्बभूवाऽऽदौ महामाया ततो हि सा ॥३॥ तां कालशक्तिमादाय वासुदेवोऽक्षरात्मना । सिसृक्षयैक्षत यदा सा चुक्षोभ तदैव हि ॥४॥ भागवततृतीये—भगवानेक आसेदमग्र आत्माऽऽत्मनां विभुः ॥१॥ कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः । पुरुषेणाऽऽत्मभूतेन वीर्यमाधत्त वीर्यवान् ॥ २ ॥ नाऽन्यत्र यद्भगवतः प्रधानपुरुषेश्वरात् । आत्मनः सर्व-

स परमात्मा श्रीहरिरक्षरे शरीरी तेजसि धाम्नि शरीरी प्रकाशेऽपि शरीरी दिव्यसाकार एव वर्तते । अर्कस्य प्रकाशे रात्रिर्लीनेव प्रकृत्यादयस्तस्य तेजसि शरीरात्मका अपि लीना एव वर्तन्ते, ततः प्रकाशवान् प्रद्योतमानो दिव्यसुमूर्त एव परमात्मा धाम्न्यप्युक्तः सृष्टावप्युक्तो दिव्यसाकार एव, सकला प्रकृतिः सकार्या मूला प्रकृतिः सकाला मूलप्रकृतिश्च तदा सृष्टिप्राक्कालेऽक्षरतेजसि तिरोभूताऽभवत् , सत्यपि प्रकृतिस्तेजोविजातीया छायात्मिका तेजसि न दृश्यते, सा सूक्ष्मदशापन्ना सकार्यमूलप्रकृतिः सकाला स्वय लीनाऽपि यदा, **सिसृक्षेति**—तस्य परमात्मनः, यदा ब्रह्माण्डाना सिसृक्षाऽभवत् तदा, सकाला सकार्या महामायाऽऽदौ सृष्टावादिक्षणे, आविर्बभूव—स्थूलाऽऽरम्भणमात्तवतीति । तत्र तस्या युक्ता या कालशक्तिः साऽपि कार्यावस्था स्थूलाऽऽविर्बभूव, ताम् , **कालशक्तिमादाय**—परवासुदेवः परमात्माऽक्षरात्मना निजसिसृक्षया मुक्तपुरुषमैक्षत, समुक्तो महामायापतिः समभवत् , तेनारब्धेन महामाया क्षुब्धा विषमावस्थाऽभवत् , अथ जगदङ्कुरादयः समभवन् । अत्रेक्षणकर्ता सिसृक्षावान् परमात्मा दिव्यसाकारमूर्तिरेवोक्तः, स च पुनः सृष्टावागतः कालशरीरी तत्त्वशरीरी भूतशरीरी मानववेशादिशरीरी दिव्यसाकार एवेति प्रतिपादितः, अस्याऽवताराः सर्वे दिव्यमूर्तय उक्ताः । भगवान् पुरुषोत्तमनारायणः स्वसमानाधिकवर्जित एक एव सृष्ट्यादौ प्रलये सर्वमिदमपि सूक्ष्म विलीनमिवाऽऽस, विभुर्व्यापकः स्वाक्षरब्रह्मतेजसः क्वापि लयाऽभावात् शाश्वततेजोवत्त्वात् आत्मनाम् आत्माऽप्यन्तर्यामी व्यतिरिक्तश्च साकारवेष एवाऽऽस विशिष्टः सूक्ष्मे स्थूले वा साकार एव दिव्य आस ॥ १ ॥ **कालवृत्त्येति**—निजसकल्पात्मकेन मूर्तिमत्पुरुषेण निजव्यापारवृत्त्या क्षोभिताया सृष्ट्यर्थ पराभावितायां सकामाकृताया ततो जनितत्रिगुणमय्या मायाया वधूस्थामिव, अधोक्षजः—अधोऽधोऽन्तर्निरीक्षणकर्ता भगवान् पतिरिवाऽऽत्मभूतेन मुक्तस्वरूपेण चेतनेन पुरुषेण विशिष्टवेषेण स्वयमेव मुक्तस्वरूपेण महापुरुषस्वरूपेण साकारः साकारेण मुक्तेन विशिष्टदिव्यसाकारद्वयात्मकेन स्वेन सवीर्येण स्वरूपेण वीर्यवान् अप्रधृष्यसामर्थ्यवान् भगवान् वीर्यम् अप्रधृष्यसामर्थ्य आधत्त निहितवान् । ततः सगर्भेव सबला स्थूलबलाऽप्रधृष्यवीर्याधानाऽप्रधृष्या माया साकारदिव्यचेतनगर्भा सार्भकेव भार्याऽन्तर्वर्तनी जाता, स्थूलावस्थाऽऽरभत । अत्र साकारदिव्यपरमात्मा साकारदिव्यमुक्तात्मा साकारमाया चोक्ताः ॥ २ ॥ **नाऽन्यत्रेति**—यत् यस्माद्धेतोः, भगवदितरेषा सर्वेषा

भूतानां भयं तीव्रं निवर्तते ॥३॥ एकादशे—त्वत्तः पुमान् समधिगम्य यथाऽस्य वीर्यम् ॥४॥ सत्त्वं रजस्तम इति प्रकृतेर्गुणाः ॥५॥ त्वत्तोऽस्य जन्मस्थिति-संयमान् विभो वदन्त्यनीहादगुणादविक्रियात् । त्वमीश्वरे ब्रह्मणि नो विरुद्ध्यते तदाश्रयत्वादुपचर्यते गुणैः ॥६॥ हरिस्वरूपज्ञानार्थं स्वरूपनिर्णयः

---

सभयत्वेन सर्वथा भयनिवर्तकत्वाऽभावादेव हेतोः, प्रधानपुरुषाणामीश्वरात् परमेश्वरात् भगवतः सर्वैश्वर्यवतः श्रीहरेः सर्वभूतानाम् अन्तरात्मनो जीवनप्राणात्मकात् प्रभोः, अन्यत्र अन्याधारे, तीव्र भय ससारभय मायालयभय महाप्रलयपराभवभयम् अनिर्मोक्षभय महामायासुषुप्त्या-वृत्तताभय न निवर्तते । ततः साकारदिव्यमूर्तिं परमपुरुष दिव्यमानववेषमाश्रयेत् ॥ ३ ॥ **एकादशे—त्वत्त** इति । अस्य साकारदिव्यपरमात्मनो वीर्य महासामर्थ्यम् उपासनया, त्वत्तः—दिव्यमानववेषस्वरूपात् भवत एव, समधिगम्य, पुमान् उपासक आत्मा देही, **यथा**—यद्वद् भगवान् वीर्यवान्, तद्वत् वीर्यवान् जायते । अत्र सवीर्यो भगवान् उपासना-विषयः सगुण साकारदिव्यमूर्तिस्तत्राऽत्र चाभिहित ॥ ४ ॥ **सत्त्वमिति**—सत्त्वादिप्रकृति-गुणरहितत्वात् निर्गुणोऽपि निजदिव्यासख्यगुणसहितत्वात् सगुणो दिव्यगुणो दिव्यानन्दघन स्वरूपसत्साकारः परमात्मा प्रोक्तः ॥ ५ ॥ **त्वत्तोऽस्येति**—हे विभो व्यापकाऽन्तर्यामिन् परमात्मन् ! अविक्रियात् साकारदिव्यस्वरूपे सुमूर्ते शाश्वतैकमाने विकारराहित्यात्, अगुणात् विकृतमायिकगुणराहित्यात्, अनीहात्—ईहा फलभोगतृष्णा, परिपूर्णस्य तद्राहित्यात्, ईहाप्रयुक्तारम्भाऽभावात् । एतादृशादपि त्वत्तः, अकारणस्थितेरपि भवत्तः, अस्य सृष्टात्मक-जगतः, जन्मस्थितिभङ्गान्, तद्विज्ञा वर्णयन्ति, कारणकार्यात्मकविशिष्टैकतत्त्वादेव भवतः सर्वमपि तज्ज्ञानिनो वदन्ति, तदत्र अकारणस्थितौ कार्यकथन विरुद्ध्यते इति तु नात्र शक्यम्, यतोऽकारणोऽपि कार्यसमर्थो भवान्, शरीरात् कारणात् कार्याणि जनयसि, शरीर मायातत्त्व कालतत्त्व च, तस्मात् त्रिगुणात्मकात्, गुणैस्त्रिगुणैर्युक्तस्य तस्य मायातत्त्वस्याऽऽ-श्रयत्व शरीरित्व प्रेरकत्व कार्योन्मुखीकरणत्व तु त्वय्यात्मनि परमात्मन्येवाऽस्तीति मायानिष्ठ-मुपादानकारणत्व त्वय्युपचर्यते विशिष्टे व्यवह्रियते, अतोऽकारणेऽपि स्वरूपमूर्तौ त्वयि ब्रह्मणि परब्रह्मणीश्वरे परमेश्वरे, सकार्यता न विरुद्ध्यते । तथा च स्वाश्रयशरीरित्वससर्गेण गुणवति भवति स्वजनकशरीरित्वसम्बन्धेन कार्यवत्त्व न विरुद्ध्यते इति । सोऽय भवान् भगवान् सगुणः साकारः परमपुरुष शरीरवानिति दिव्य एव पुनः पुनः दिव्यशरीर एव पुनः पुनः शाश्वत-दिव्यवेष एवेति निरूपितोऽत्र ॥ ६ ॥

अथ विप्रतिपत्तिषु साकारसगुणत्वाभाववत्त्व विरुद्धकोटिः, निराकारनिर्गुणत्ववादिना सा निराकारनिर्गुणश्रुतिस्मृत्यादिवाक्याधारा, किन्तु तेषा तद्वाक्याना गौणत्वेन तथाविधाभि-प्रायाऽपरत्वेन शाब्दयुक्तिप्रमाणादिभिः प्रतिपादितत्वेन नैर्बल्यम्, सगुणसाकारवाक्यानामेव प्राबल्यम्, तथाहि—सृष्टेः सहारात्, धाम्नोऽसंहारात्, नित्यमुक्ताना 'यत्र पूर्वे साध्याः

**कृतः। गोपालानन्दमुनिना श्रुतिस्मृत्यनुसारतः ॥१॥ श्रीविक्रमशकस्याऽब्दे वेदांकवसुभू-(१८९४)मिते। बुधे वसन्तपञ्चम्यां निर्णयः पूर्णतां गतः ।२।**

**इति श्रीहरिस्वरूपनिर्णयः समाप्तः ॥**

---

सन्ति देवा' इत्यनेन शाश्वतस्वरूपवर्तमानतायाः प्रतिपादनात्, प्रलये परमेश्वरस्येक्षणसहितस्य वर्णनात्, षाड्गुण्यसहितस्य गुणाष्टकसहितस्य पुण्डरीकाक्षस्य हिरण्यकेशश्मश्रुयुतस्य व्यतिरेकस्वरूपेण सदा वर्तमानस्य प्रतिपादनात्, आनन्दघनस्वरूपसत्साकारमूर्तेः प्रतिपादनात्, पुरुषविधस्य वीर्यवतः मुक्तसेवनार्हस्वरूपस्य वर्णनात्, मूर्तस्वरूपाऽक्षरब्रह्मसेव्यस्य सेवागीकारार्थकनित्यसाकारदिव्यपरब्रह्मणः प्रतिषिद्धत्वात्, सगुणवाक्यानामभावे लक्षणाना गौरवान्नैरर्थ्यात् सामानाधिकरण्यहानेर्भिन्नप्रवृत्तिनिमित्तत्वहानेर्यथाश्रुतार्थेऽर्शआदित्वेन मत्वर्थीयप्रत्ययवत्त्वेऽर्थान्वयलाघवात् लक्षणाबाहुल्याऽग्रहणसौगम्यात् मायिकतत्त्वलेपाशाभावात् अविद्यापराभवाऽभावात् विकल्पाऽसहत्वेनोपास्याऽवशेषताविरहात् अविद्यापराभूतब्रह्मस्थित्यविश्वासात् तथाविधपराभूतस्थितिब्रह्मभावेष्टतावैधुर्यात् नित्यात्मनामनित्यमिथ्यात्वाऽसभवात् अनादिसिद्धाऽज्ञानात्मकाऽविद्यासत्त्वप्रयुक्ताऽद्वैतत्वव्याघातात् स्वरूपाऽन्यथाभावाऽसभवात् प्रकाशपराभवाऽभावात् अनिर्वचनीयत्वेनापि निर्वाचितस्य वदतो व्याघातात् शब्दात्मकमिथ्याश्रुतीना तत्राऽप्रसारात् तदाधारमृषाचरणापत्तेः मिथ्याधिकारिप्रयुक्तिमिथ्याशास्त्रावलम्बनवैयर्थ्यापत्तेः, धारणाध्यानसमाधिबोधकसाक्षात्कर्तव्यश्रुतिवैयर्थ्यापत्तेश्च ततो निर्णीयते यत् साकारसगुणश्रुतीना दिव्यसाकारसगुणतापरत्व मुख्यार्थपरत्व निर्गुणनिराकारश्रुतीनां मायिकगुणमायिकाकारराहित्यपरत्व चेति सम्यगुपपद्यते निराबाधत्व विरोधशून्यार्थकत्वम्, स्वरूपसदानन्दघनसाकारैकतत्त्वात्मकमूर्तत्व च श्रीस्वामिनारायणपरमात्मना 'रसघन आनन्दघन' इत्यादिमूलकसालम्बनसिद्धान्तेन शर्करारसजनालिकेरफलनिदर्शन यदुपदर्शितं तत्त्वतिसमञ्जसमिति, चेतनात्मनामपि साकारपरमात्मोपास्त्या जलजहिमपिण्डवत्सम्पद्यमानज्ञानचैतन्यैकमूर्तिकमुक्तात्मस्थितिकत्व चापि सुसमञ्जसमिति, शाश्वतदिव्यसाकारश्रीहरेर्मानवदिव्यसाकारवेषस्य पुनर्धामगतदिव्यसाकारस्वरूपात्मकत्वमेवेति कारणावस्थदिव्यसाकारत्व प्रलयावस्थदिव्यसाकारत्वं सृष्ट्यवस्थदिव्यसाकारत्वम् अन्तर्याम्यवस्थदिव्यसाकारत्व तथा च शाश्वतदिव्यसगुणसाकारकिशोरानन्दघनस्वरूपसत्साकृतित्व परमात्मनोऽप्रतिहतसिद्धमिति सर्व निरवद्यम् ।

**हरिस्वरूपेति**—अथ श्रीस्वामिनारायणभगवत्सिद्धान्तः—१-श्रीपरब्रह्मपुरुषोत्तमोऽऽक्षरातीतश्रीस्वामिनारायणपरमात्मा सच्चिदानन्दस्वरूपसद्दिव्यकिशोराऽऽनन्दघनाऽऽनन्दमात्रकरपादमुखोदरादिशाश्वतदिव्यसाकारमूर्तिः सर्वशरीरिनियन्त्रन्तर्याम्यसंख्यनित्यनिरतिशयदिव्यगुणैश्वर्यशक्तिचमत्कारसार्वज्ञ्यसत्यसकल्पादिमान् ब्रह्मधामैकनिलयो द्विभुजः सर्वोपरिस्थः स्वसारूप्यापन्नानेकसच्चिदानन्दसुमूर्ताऽपरिमितमुक्तमण्डलसुसेवितध्यातप्रसादितः सर्वावतारी सर्वकर्मफलप्रदाता स्वतन्त्रः सर्वशरीरी व्यतिरेकी स्वय चान्वय्यपि कारणकार्यात्मकविशिष्टवेषो नरनाट्यादिवेषोऽखण्डदिव्यस्वरूपः सर्वस्थोऽपि निजब्रह्मधाम्नि विराजते औपनिषदः परमपुरुषः स्वयम् आनन्दघनतत्त्वात्मस्वरूपसत्साकारः परमात्मा ।

२—परमात्मनस्तेजःप्रकाशस्वरूप परमाऽक्षरधामसञ्ज्ञक परब्रह्ममूर्त्याधार मूर्तिनिःसरत्तेजश्चेतनतत्त्व स्वय मूर्तममूर्त चेति द्वेधा व्यवस्थित ब्रह्मतत्त्व प्रकाशघनमूर्त्यात्मकचेतनस्वरूपसाकार सेवक मूर्त सगुण सर्वैश्वर्यादिमद् दिव्यपुरुषाकार परमात्मसाकार व्याप्य शरीरात्मक श्रीपुरुषोत्तमसेवापरायणम्, तदस्याऽमूर्त चेतनस्वरूपमक्षरधामनामक सर्वत्र व्यापक केवलान्वयि तेजस्तत्त्व ब्रह्मलोकस्वरूप मुक्तिस्थान साकारसारूप्यमुक्तिमाताना मुक्तानामनादिमुक्ताना च निवासस्थलस्तरात्मक भगवदितरतत्त्वान्वयि चान्तर्यामिशक्तिस्वरूपमपि तदेव ब्रह्म श्रुतिसूत्रादिप्रतिपादितम् ।

३—मायाऽऽश्चर्यकारिणी त्रिगुणमयी नित्यैका छायास्वरूपा मूलप्रकृतिः मुक्तपुरुषात्मकाधिदेवताधिष्ठिता जडतत्त्वसृष्टिकारिणी सूक्ष्मस्थूलाकारा कारणकार्यात्मिकी तामसाऽज्ञानरागादितदात्मकतत्त्वव्यवहार्या तमोघनसाकारस्वरूपा परिणामादिस्वभावा ।

४—ईश्वरतत्त्वम् ऐश्वर्यघनात्मक स्वच्छसत्त्वावरित सत् अनेकदिव्यसच्चिदानन्दैश्वर्यमूर्तिकचेतनतत्त्व सृष्टिसञ्चालकाऽऽधिदैवतस्वरूपसाकार स्वतन्त्रमपि परमात्मपरतन्त्र तत्त्वान्तरम्, ईश्वरा असख्याः ।

५—सच्चिदानन्दा ज्ञानघनस्वरूपा गुणवन्त आत्मानो जीवात्मानो ज्ञानप्रभायुक्तज्ञातृस्वरूपाः कर्मफलिनः सूक्ष्मास्तेजस्विनोऽन्तःस्थाऽन्तर्यामिस्वरूपाऽनुस्वरूपगर्भगतमूर्त्याकाराः चेतनाः शरीरा शरीरिणोऽणुमाना ज्ञानेच्छाकृतिसुखदुःखवासनाभावनादिगुणिनो द्रव्यतत्त्वात्मका असख्या नित्या जडाधिष्ठातारश्चेति ।

६—भगवदुपासनादिभिः सम्पन्ना मुक्ता ब्रह्ममुक्ता ज्ञानघना अपि ऐश्वर्यघना अपि मुक्तिस्थितौ भगवत्प्रकाशवर्धितप्रकाशाः प्रकाशघनस्वरूपा भगवद्गुणाधिक्याविर्भावसम्पत्तिशालिनो वारिजहिमपिण्डवत् शरीराकारधर्मभूतज्ञानजज्ञानघनपिण्डाश्चैतन्यमात्रमूर्त्याकाराः साकाराः सर्वमुक्तगुणागाराः श्रीहरिमूर्तिप्रवेशलब्धज्ञानघनाकाराः सच्चिदानन्दचेतनचैतन्यतत्त्वमात्रपुरुषाकाराश्चैतन्येतरतत्त्वाकारानपेक्षाकाराः शाश्वताः सार्ष्टिसालोक्यसायुज्यसारूप्यसम्पत्तिशालिनः सेवका ब्रह्मभावा ब्रह्मस्वरूपानुस्वरूपा परब्रह्मसमाकारा इति ।

७—अवतारी स्वय परब्रह्म परमात्मा सर्वोपरिस्थः परमेश्वरः स्वयमेक एव सर्वसृष्ट्याचार्यवेदशास्त्रमुक्तादिप्रतिपाद्यध्येयसेव्यः साकारः सचिह्नः सगुणः ससुभूषणः ससुवेषः सस्वलकारः ससुसामर्थ्यैश्वर्यशक्तिसकल्पेक्षणादिव्यापार आनन्दघनः स्वयमवतारी श्रीस्वामिनारायणपरमात्माऽत्र धर्मसुतो नरनाट्यवेषो दिव्यानन्दघनस्वरूपसत्साकारमूर्तिः स्वय स्वीयानैश्वर्यगुणशक्तिसामर्थ्यचिह्नाभूषणोपकरणवेषतिलाङ्गभगब्रह्ममुक्तान्यतमान् सृष्टिषु प्रहिणोति चेतनात्मकास्तान् स्वसत्तान्वितान् सुमूर्तान् सुमूर्तवेषान् यथावकाशस्वरूपवेषान्, तानिमान् अवतारान् स्वशरीरभूतान् स्वतादात्म्यतया व्यवहृतान् कार्यार्थ प्रहितान् स्वमूर्त्यभिन्नान् कार्यानन्तरं तिरोभावयति स्वयमेव स्वस्मिन्निति, स्वतादात्म्यतयाऽभिन्ना अपि स्ववृत्तितत्त्वात्मकतया भिन्नाश्चेतना अवतारा अंशावेशकलाविभवाद्या अवतार्यन्विता विशिष्टा अप्युपचर्यन्ते, अयमवतारस्वरूपसिद्धान्तः ।

८—ब्रह्मणोऽक्षराभिधानस्य धाम्नः प्रकाशात्मकस्य व्यापकस्य सर्वत्र श्रुत्यादिभिः सूत्रैश्च प्रतिपादनात् अन्तर्यामिशक्तितया व्यापनात् पुरुषोत्तमस्य किरणात्मकतया निर्दिष्टत्वात् साकारवत्कर्मफलप्रदानकार्यकारित्वात् परब्रह्मब्रह्मेतरसर्वतत्त्वान्वितत्वात् ब्रह्मणोऽस्य सर्वान्तःप्रविष्टत्वात् सर्वविशिष्टत्व ब्रह्मणोऽस्य वस्तुस्थितित्वात् सर्वजडचेतनविशिष्टब्रह्मत्वस्य सिद्धेः विशिष्टब्रह्माऽद्वैतत्व श्रीपरब्रह्मणि सुघटते, तेन विशिष्टाद्वैतस्य विशिष्टब्रह्माऽद्वैतत्वे पर्यवसानम्, विशिष्ट ब्रह्म अक्षरब्रह्म धामस्वरूपम्, तत्राऽद्वैत परब्रह्मेति, साकारेऽक्षरे धामस्वरूपेऽक्षरे च मुक्तेषु च यद् यत् परब्रह्म विशेषित वर्ण्यते तत्र तत्र यद् यत् तदेकमेवेत्यद्वैतपद सार्थकम्, विशिष्टाना भेदेऽपि स्वरूपत ऐक्याद् द्वैधात्वाऽभावात् अद्वैतमिति विशिष्टब्रह्माद्वैत सुनिष्पन्न निरवद्यम् ।

९—आत्मना मुक्ताना ब्रह्मस्थाना यथावकाशं सर्ववेषस्वरूपसम्पादनसिद्धान्तात् धामप्रकाशश्चेतनः, स्तराश्चेतनाः, साधनान्युपकरणानि चेतनमुक्ताः, वेषाऽऽभूषाऽम्बरसिहासनमहोलाश्चेतनाः, चिह्नालकारागैश्वर्यगुणशक्तयश्चेतनाः, स्थलीमहोद्यानतरुगुल्ममालाहारौषधिसुगन्धसारादिनदनदीचिदम्बरसमयऋतुकरणोपकरणशोभाविभूतयश्चेतनाः, ब्रह्मलोको ब्रह्मलोकीयाश्च सर्वेऽर्थास्तत्त्वानि चेतना वेषान्तरस्वरूपसाकारभावानुभवनयथेष्टसत्यसकल्पकामफलविहारा भोगभोग्यभोग्योपकरणभोक्तृचेतनमात्रस्वरूपवर्गा इति सिद्धान्तात् अचेतनविभूतेस्तत्रानङ्गीकारात् नैरर्थ्यात् तदधीनस्वरूपसाकारताया अनावश्यकत्वात् कर्तुमकर्तुमन्यथाकर्तु समर्थस्य श्रीहरेर्ब्रह्मणो ब्रह्ममुक्ताना तथा स्वस्वामिप्रतापेन सामर्थ्यवत्त्वात् भोग्याद्यर्थकविभूतेर्वैयर्थ्यात् विभूत्यनावश्यकत्वात्, स्वरूपसच्चेतनसाकारत्वाऽनङ्गीकर्तृणा निराकारवादित्वाऽवैशेष्यात्, निर्दोषे तत्र दूषितबुद्धिकल्पितदोषाऽसस्पर्शात् ।

१०—मुक्ताना परमपुरुषसारूप्यात् सर्वदा शाश्वतिकपरमपुरुषाकारताया एव सामञ्जस्यात्, यथावकाश सेवनार्थ समाधिद्वारा समायातप्राघुणिकदेवताना सम्मानार्थस्वागतार्थ तदानीन्तनसजातीयसारूप्यवेषमात्रावस्थानताया अपि स्वीकारात् शक्तिस्वरूपाणा भक्तिमात्रादीना शाश्वतपुवेषमुक्तत्वेऽपि क्वचित् प्रासगिकाऽपुवेषमुक्तत्वेऽपि विरोधाभावात् अनियताऽशाश्वतप्रासगिकयथोपयोगियथभावकाशलक्ष्मीराधाजयाललितादिवेषावस्थानेऽपि बाधाऽभावात् यथेष्टस्वरूपसत्साकारवेषवत्त्वस्यापि सिद्धान्तान्तर्गत्वात् श्रीहरेरिष्टत्वात् ।

११—श्रीहरिणा निजस्वरूपमूर्तित एव भक्ताना दर्शनलाभकृते प्रकटीकृता अवतारस्वरूपविशेषाश्चतुर्विंशत्यादयः स्वेनैव स्वस्वरूपात्मिक्यस्ता मूर्तयो मन्दिरेषु प्रतिष्ठापिता न तु स्वधर्मजत्वपूर्वजाता इति भावनाया नाऽन्याश्रयणदोषः पातिव्रत्यादिभङ्गश्च, धर्मपुत्रदर्शितानि निजस्वरूपवेषान्तराणि समाश्रितानि दर्शनपूजनवन्दनादौ स्वस्वाम्यात्मकाऽवतारिसमाश्रयणसुरक्षणपराणि तानीति अवतारिमात्राश्रयणमेतत् निःक्षतिकम् ।

१२—वचनामृते 'जय स्वामिनारायण' इति स्वमुखेन स्वनाम्न उक्तत्वात् तत्राऽष्टाक्षरेण स्वस्वामिनामरटनभजनजपादौ सर्वोत्कृष्टत्वलाभात् । उक्त च परब्रह्मणः स्वामीति नाम—स्कन्दपुराणे वैष्णवखण्डे वेकटाद्रिमाहात्म्ये अध्याये श्लोकः ९—'स्वामी नारायणोऽ-

स्माकमास्ते श्रीवेंकटाचले । कदाचिद्द्वयमारुह्य हंसशुक्लं मनोजवम्' ॥ ९ ॥ नारदपञ्चरात्रे भारद्वाजसंहितायां परिशिष्टे द्वितीयाऽध्याये श्लोकः ४०—'न्यासाख्यं परमं मन्त्रं वाचयित्वाऽथ बोधयेत् । श्रीमन्नारायणः स्वामी दासस्त्वमसि तस्य वै' ॥ ४० ॥ 'ब्रह्मवैवर्तपुराणे श्रीकृष्ण-जन्मखण्डे अध्याये ७८, श्लोकः ४०—'शृणु नारायणक्षेत्रं जलाद्धस्तचतुष्टयम् । अत्र नारायणः स्वामी नान्यः स्वामी कदाचन' ॥ ४० ॥ पद्मपुराणे उत्तरखण्डे अध्याये ७२, विष्णुसहस्र-नामसु—'नरः कृष्णो हरिर्धर्मनन्दनो धर्मजीविकः ॥ १७५ ॥' शिवपुराणे रुद्रसंहितायां २, सतीखण्डे २, अध्याये ४३, 'नाऽनीतिकारकः स्वामी परब्रह्म सतां गतिः' ॥ ३४ ॥ ब्रह्मवैवर्तपुराणे खण्डे ४, पूर्वार्धे, अध्याये २२, धेनुक उवाच—'त्वं च धर्मसुतो भूत्वा लोक-निस्तारकारकः' ॥ ४८ ॥ 'सुधासिन्धुतरंगे १४२, ( म० त० ९ ) 'स्वामिनारायणः सोऽयं नित्यं हृदि मयेक्ष्यते' ॥ २४ ॥ 'तस्य रूपान्तरमपि न ध्येयं ध्येय एव सः' ॥ १४ ॥ 'मत्स्य-यवधनुःशूलशरस्वस्तिकादिषु । 'द्वयं वाऽथ त्रयं चापि चत्वारि पञ्च चैव हि । दृश्यन्ते वैष्णवश्रेष्ठ अवतारे कथञ्चन' ॥ इतिहरिदिग्विजये षष्ठोल्लासटिप्पण्यामुक्तम् ।

१३—मुक्तिः दिव्याकारकिशोरस्वरूपश्रीस्वामिनारायणभगवतः तत्समदिव्यस्वरूप-सन्मुक्तयात्मककिशोरज्ञानघनस्वरूपसारूप्यापन्नैर्नियामकत्वातिरिक्तभगवत्त्वसमापन्नैः सेवकस्वरूपैः स्नेहसेवाऽऽनन्दभोगात्मिका, परमेश्वरोपासनाबलेन प्रसादितस्य भगवतः स्नेहाकर्षणेनोपास्य-मूर्तिप्रविष्टानां द्रागेव सलिलहिमपिण्डवत् ज्ञानप्रभामूर्तिकाऽऽत्मचैतन्याऽऽविर्भूतकिशोरसारूप्य-सम्पन्नानां मुक्तानां नित्यसाकारत्वम् 'अस्माल्लोकात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते' इति, 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति' श्रुतिभ्यां निर्दिष्टं भगवत्सर्वानन्दभोगवन्महाशनवद्दिव्यशाश्वतसाकारत्वम्, मुक्तिं गतानां चेतनानां जीवात्मनां ज्ञानघनानामैश्वर्यधनानामीश्वराणां च विशिष्टप्रकाशवत्तया ब्रह्मता च संघटते शाश्वतीति ।

१४—अथ मुक्तिसाधनानि चत्वारि धर्मज्ञानवैराग्यभक्त्याख्यानि, भागवतधर्मो भक्त्यर्थक-सर्वकलापः साधनपदभाक्, ज्ञानम् आत्मज्ञानं परमात्मविज्ञानं जडचेतनतत्त्वज्ञानं साधर्म्य-वैधर्म्यज्ञानं विवेकज्ञानं साकारोपासनात्मकं सततस्मरणमनननिदिध्यासनाभिनामकं परमात्मनो माहात्म्यज्ञानं च साधनस्वरूपम्, वैराग्यं विषयरागाभावो भगवन्मात्रप्रीतिरतिफलको मोक्षसाधनम्, भक्तिस्तु साधनस्वरूपा साध्यस्वरूपा चेति, साध्यो भगवान् स एवोपायः शरणागतिः, तेष्वेकतमन्यूनतायाम् अनैकान्तिकता, चतुष्टयसत्त्वे त्वेकान्तिकता, अथ शरणागतिः षोढा—'विश्वासो वरणं न्यासः कार्पण्यं च स्थिरा मतिः । आनुकूल्यस्य संकल्पः प्रातिकूल्य-विवर्जनम्' इति स्वरूपा । निष्कामनिर्लोभनिर्मानिनिःस्वादनिःस्नेहात्मकपञ्चवर्तमाननियमास्तथा शुभदेशकालक्रियासंगमन्त्रध्यानदीक्षाशास्त्राणि तथा साधुजनसच्छास्त्रसद्धर्मभगवदवताराणां संगः सत्संगोऽपि च भगवत्प्रसन्नताद्वारा ब्रह्मचर्यस्य च पालनेन मोक्षप्राप्तिः, भगवन्मूर्तीनां साधूनां सेवा प्रसन्नताद्वारा मोक्षप्रदा । पञ्चरात्रशास्त्रानुसारेण भागवती दीक्षा भक्तिद्वारा मोक्षदा धर्मार्थकाममोक्षाः पुरुषार्था मताः ।

१५—अथ पदार्था द्रव्याणि—परब्रह्म, मूलाक्षरब्रह्म, मुक्तब्रह्म, अवताराः, धामानि,

ईश्वरात्मानः, जीवात्मानः, मूलमाया, प्रधानमाया, महत्तत्त्वम्, अहंकारः, चित्तम्, मनः, प्राणः, श्रोत्रम्, त्वक्, चक्षुः, रसनम्, घ्राणम्, वाक्, पाणी, पादौ, पायुः, उपस्थम्, तन्मात्राणि शब्दस्पर्शरूपरसगन्धात्मकानि, भूतानि गगनाऽनिलाऽनलसलिलाऽवनयः, विभूतिः, कालः, दिक्, अन्धकारः, निद्रा चेति ॥ अथ द्रव्यगुणाः—सत्त्व रजस्तमः, ज्ञानम्, कामना, चमत्कारः, धर्मोऽधर्मः, प्रीतिः, आकर्षणम्, उपासना चेति ॥ अथ केवलगुणाः—रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगतादात्म्यविभागपरत्वाऽपरत्वगुरुत्वद्रवत्वस्निग्धत्वशब्दसुखदुःखेच्छाद्वेषप्रयत्नसंस्कारशक्तिस्थैर्याणि ॥ क्रियाः—स्पन्दकम्पगतिप्रास्फोटनलीनीकरणाद्याः ॥ जातिः—साजात्यवैजात्यसामान्याऽवान्तरोपाधयः ॥ विशेषः—सौलक्षण्यवैलक्षण्यव्यावर्तकतातत्त्वताः । सम्बन्धाः—तादात्म्यसुयोज्यत्वसंसिद्धत्ववृत्तित्वस्वरूपवैशिष्ट्यसमवायपर्याप्तय ॥ अभावाः—प्रागभावप्रध्वंसाभावाऽन्योन्याभावाऽत्यन्ताभावाऽचिराभावाः ॥ वृत्तयः—प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ॥ अवस्थाः—स्थूलाः सूक्ष्मा मध्याश्च ॥ कर्माणि—प्रारब्धसञ्चितक्रियमाणानि ॥ विकारपरिणामविवर्ता रूपान्तराणि ॥ यथार्थज्ञानम् अयथार्थज्ञान च, सविकल्पक निर्विकल्पक च, प्रत्यक्षम् अनुमानम् उपमान शब्दज्ञानम् अर्थापत्तिरनुपलब्धिः संभव ऐतिह्य चेष्टा प्रमाणानि ॥ प्रमा अप्रमा भ्रमस्तर्को व्याप्तिः सद्धेतवः फल कथा वादः सिद्धान्तः कामना चमत्कारोऽवयवा निग्रहजातिप्रयोगाश्च स्वीकृताः ॥ नित्यसर्वज्ञभगवदुच्चरितवेदवचनामृतादिप्रामाण्यम्, सर्वज्ञब्रह्ममुक्ताद्युच्चरितोपदेशवार्तादिप्रामाण्यम् ॥ अक्षरधामगोलोकवैकुण्ठाऽमृतधामाऽव्याकृतधामश्वेतद्वीपधाममहालक्ष्मीधामसाकेतबदरिकाश्रमकैलासादीनि धामानि ॥ अक्षरे धाम्नि द्विचरणारविन्दोपासना, गोलोकवैकुण्ठादौ विभूतिविग्रहाः द्विभुजा गोपगोपिकाः, पार्षदपार्षदान्यः चतुर्भुजाः, अवतारैरत्र त्यक्तानि शरीराणि तु लीलाविभूतिशरीराणि, क्वचित्तु दिव्यविभूतिशरीराणीति तु विलीनीकृतान्यपीति ॥ औपनिषदे ब्रह्मलोके पत्नीपत्यादिकमठानस्याऽसंभवात् ।

१६—'ब्रह्माऽहम्' 'ब्रह्माहं भगवद्दासः' 'ब्रह्मणोऽहं' मित्यादिस्वात्मसाक्षात्कारास्तु 'सुधासिन्धुसारसन्दोहन' ग्रन्थादधिगन्तव्याः, सुधासिन्धौ स्वात्मादिसाक्षात्कारा बहुधा उपासनानुसारं वर्णिताः ।। ते चापि सारसन्दोहनादवगन्तव्याः ॥ मुक्तिप्रत्यक्त्वसाक्षात्कारः—स्वोत्पाद्यस्वविषयकवृत्तिवेद्यः 'स्व जानामी'त्याकारकः । अयमपि बहुधा शरीरशरीरिविशिष्टाऽविशिष्टभावभेदेन निरूपितस्तत एवाऽधिगन्तव्यः ।

१७—ख्यातिस्तु सत्समुच्चयख्यातिर्विलक्षणाऽत्र, तथाहि—समुच्चयस्त्रेधा बीजस्तम्बफलात्मकः, अधिष्ठान बीजम्, पिठरः स्तम्बः, फलम् अर्थक्रियाप्राप्त्यादि, शुक्तिरधिष्ठान पिठरो रजत विरलावयवात्मकम्, फल तत्प्रतिगमनार्थक्रिया, अर्थक्रियावयवाधिष्ठानानामेकज्ञानस्य ख्यापनात् समुच्चयितपदार्थज्ञापनात्, तत्र स्थूल यदिष्टं पदार्थं तन्न, तेन भ्रमः, पूर्वं साफल्ये ध्यातेऽपि पश्चात् फलवैधुर्यम् इति यज्ज्ञानम्, तत्पूर्वं निश्चयस्वरूपो भ्रमः समुच्चयख्यातिः, सूक्ष्मरजतार्थक्रियाप्राप्तिश्चाक्षुषी दर्शनमात्रात्मिका दृश्याऽवस्थाविषयिणी, ग्राह्यावस्था औपयोगिकी, स्थूलावस्था नास्ति, सूक्ष्मावस्थ रजत वर्तते, सूक्ष्मावस्थाप्रवृत्तिरपि तावन्मात्रसत्या,

सूक्ष्मावस्थाप्रयोज्या क्रिया तावन्मात्रसत्या, सूक्ष्मावस्थाजन्यरजतबोधः पौरुषेय आत्मनि सत्यः, सूक्ष्मावस्थजडचेतनविशिष्टस्य कारणात्मकस्य परब्रह्मणः 'सूक्ष्मावस्थोऽहं कारणावस्थ' इति ज्ञाने स्वयं विषयोऽधिष्ठानम्, स्वयं कार्यात्मकः परमात्मा सूक्ष्मावस्थकार्यात्मकः पिठरः, सूक्ष्मावस्थकारणगतस्थूलकार्यसंकल्पात्मकसूक्ष्मगोचरीभूताऽर्थक्रियाप्राप्तिः फलम्, त्रयमपि सत्यम्, सूक्ष्मं परब्रह्म, स्थूलः कार्यसंकल्पः, तदर्थक्रियाप्राप्त्यादिः, त्रयमपि सत्यम्, प्रवर्तते चेति, यावत्स्थूलं नाऽऽविर्भूतं तावत् सूक्ष्मं तद्गोचरं ज्ञानं सत्यम्, तदानीं स्थूलाभावात्, स्थूलगोचरत्वाभावात् तावत्क्षणं निवर्तते कार्यारम्भे सर्वेषां तथा भवतीति । तथा सर्वज्ञस्य भ्रान्तिव्यवहारो नास्ति, शुष्कवेदान्तिभिस्तु अविद्याजन्याऽध्यासो मन्यते ब्रह्मणि, न त्वस्माभिः, अविद्यायास्तादृश्या ब्रह्मणि अभावात् । शुक्तिरजतस्थले तु मानवादीनामित्थं भानम्—शुक्तिरधिष्ठानम्, स्वल्पराजतावयवबहुलशुक्त्यवयवजन्यं पिठरं सूक्ष्मावस्थं विरलावयवजप्रचयावस्थं रजतं दृष्टिगोचरमात्रं ग्राह्यस्थूलगुरुतरपिण्डात्मकं नोत्पन्नम्, तत्पारिभाषिकं पिठरम्, तत्पारिभाषिकपिठरविषयकज्ञानक्रियाप्रवृत्तयो जायन्ते, लब्धीच्छया दर्शनं क्रियाकारणम्, प्रत्युपगतिः क्रिया, सा दर्शनेन जायते, इच्छा चोत्तेजिका, इच्छा रजतप्राप्तिविषयिणी स्थूलग्राह्यगुरुतरपिण्डविषयिणी, सा च ज्ञानं जनयन्ती प्रवर्तिका, स्थूलं यदिष्टं पिण्डग्रहणात्मकं गृहीतपिण्डात्मकं वा फलम्, तन्न जातम्, ततो निवर्तते, स्थूलाऽलब्धिर्निवृत्तिकारणम्, सूक्ष्मलब्धिः प्रवृत्तिकारणम्, ज्ञातुस्तु सूक्ष्मालम्बनं ज्ञानं सत्, शुक्तिरजतसूक्ष्मावलम्बनोपलम्भसत्त्वात् । शुक्तिरजतस्थूलावलम्बनोपलब्ध्यभावान्निवृत्तिः, ज्ञानं सत्, स्थूलाविषयं ज्ञानं सत्, सूक्ष्मविषयं ज्ञानं सत्, सूक्ष्मविषये ज्ञाने स्थूलविषयिता यदि अज्ञातुः अतत्त्वविदः सा भ्रान्तिरिति प्रयोगः, सर्वाणि ज्ञानानि सत्यानि सूक्ष्मस्थूलाऽवस्थविषयाणि निर्विकल्पसविकल्पात्मकानि समविषयाण्येव, सूक्ष्मज्ञाने निजक्षणे निजस्वरूपे स्थूलज्ञानत्वं चेत्, तत्क्षणे तदसत्त्वं भ्रान्तिः, उत्तरक्षणे चेत्, स्थूलपदार्थः स्थूलावस्थः स्थूलज्ञानं च, तदा न भ्रान्तिरिति ॥ एषा विधा सर्वत्र सत्समुच्चयख्यातौ, तस्मान्न केवला सत्ख्यातिः ।

१८—सर्वं साकारमिति सिद्धान्तः, आकृतिश्च ग्राह्यग्राहकस्वरूपं प्रतिबध्यप्रतिबन्धकस्वरूपम् आधाराधेयस्वरूपं सापेक्षपरिच्छिन्नस्वरूपं व्यापकमपि व्याप्यसापेक्षस्वरूपं चेति । देशतः कालतः स्वरूपतश्च तादात्म्येन स्वस्येतरभिन्नतावत्त्वं तत्त्वसीमत्वं चाकृतिः, सेयं न संयोगसंस्थानादिमात्रा किन्तु विलक्षणा, ब्रह्माण्डानां गोलकाकृतिः, वैराजानां सहस्रशीर्षाद्याकृतिः, मानवादीनां करपादाद्याकृतिः, वृक्षादीनां शाखाद्याकृतिः, सर्पादीनां लम्बाद्याकृतिः, पक्षिणां सपत्रविचित्राकृतिः, जलानां समूहाकृतिः, तेजसां ज्वालाद्याकृतिः, वायूनां स्तराद्याकृतिः, पृथिव्याः पृथुबुध्नाकृतिः, गुणानां गुण्याकृतिः, ज्ञानानां विषयाऽऽकाराः, आत्मनाम् अण्वाकृतिः, अन्ततः सर्वेषाम् आश्रयाश्रितभावेन स्वरूपसदाकृतयो विसदृश्यो भवन्त्येवेति प्रकाशानां व्यापकानामपि व्याप्याकृतिविलक्षणाकृतयो भवन्त्येवेति सर्वमपि तत्त्वजातं स्वस्वरूपे साकारं स्थूलं सूक्ष्मं दृश्यम् अदृश्यम्, वेद्यं ग्राह्यं समाधिगम्यं दिव्यालोचनगम्यं ब्रह्मचमत्कारगम्य

परब्रह्मगम्यं च साकारमेव तत्त्वमिति ॥ मध्यतरङ्गे १३—'परे ब्रह्मणि यः प्रोक्तो भगवान् दिव्यविग्रहः । सोऽहमेव भवाम्यत्र स्थितो दिव्यनराकृतिः' । इति श्रीहरिणा स्वमुखेन स्वस्य पराक्षरधामस्थितस्वदिव्यसाकारत्वं पृथ्व्यामत्र स्थितधर्मात्मजदिव्यमानवस्वरूपसुवेषसाकारत्वं पुनर्धामस्थशाश्वतदिव्यसाकारत्वं न्यवेदि ।

१९—परब्रह्म सविशेषमेव, सर्वप्रमाणानां सविशेषवस्तुविषयत्वात्, सर्वानुभवानाम् आत्मसाक्षिकसविशेषविषयत्वात्, परब्रह्मस्वरूपस्य सत्तातिरेकिस्वाऽसाधारणस्वभावविशेषैः निष्कृष्यमाणत्वात्, नित्यसंविदः विषयप्रकाशनस्वभावत्वात् स्वप्रकाशवत्त्वाच्च विशिष्टत्वात्, वस्तुनः प्रामाणिकनित्यत्वादिविधाभेदैर्विशिष्टत्वात्, शब्दस्य सविशेषवस्तुनि अभिधानसामर्थ्यस्य प्रकृतिप्रत्ययादिविशिष्टार्थप्रतिपादनकत्वात्, पदभेदस्य विशिष्टार्थभेदनिबन्धनत्वात्, पदसंघातवाक्यस्य अनेकपदार्थसंसर्गविशेषाभिधायित्वेन सविशेषप्रतिपादनपरत्वात्, प्रत्यक्षस्य निर्विकल्पकस्य एकजातीयद्रव्यीयप्रथमपिण्डग्रहणस्य केनचिद्विशेषेण ग्रहणत्वात्, सविकल्पकस्य निर्विकल्पकानुभूतपदार्थं विशिष्य प्रतिसन्धानकजात्याद्यनेकपदार्थविशिष्टविषयत्वात्, निर्विकल्पस्य प्रथमपिण्डग्रहणे सास्नादिवस्तुसंस्थानाऽननुवृत्तिकपिण्डग्रहणरूपत्वात्, सविकल्पस्य पुनः पिण्डग्रहणे सास्नादिसंस्थानानुवृत्तिकपिण्डग्रहणरूपत्वात्, निर्विकल्पकस्य इदमित्थमित्यत्र सास्नादिसंस्थानात्मकेत्थंभावस्य सत्त्ववत्त्वात्, प्रथमं सकलेतरव्यावृत्तं गोत्वादिसंस्थानविशेषविशिष्टव्यावृत्तिप्रतीतिकत्वात् । अनेकधर्माणामन्योन्यतादात्म्याभावात् परब्रह्मस्वरूपमात्रपरताया असंभवात् । अनुमानस्य सविशेषविषयकसम्बन्धविशिष्टग्रहणरूपत्वात्, प्रमाणान्तराणामपि सविशेषसदृशधर्मादिसमन्वितग्रहणरूपत्वात्, प्रकृतिप्रत्ययार्थान्विताभिधेयार्थग्रहणरूपत्वात्, बालमूकादिज्ञानानामपि परिच्छिन्नवस्तुग्रहणरूपत्वात्, परब्रह्मेतितदितराऽनवच्छिन्नत्वाद्यनुस्यूतवस्तुविषयकग्रहणरूपत्वात्, निर्विकल्पकस्य एकक्षणवर्तिप्रत्यक्षीयस्वक्षणमात्रस्थितवस्तुभेदरूपतत्संस्थानरूपगोत्वादिग्रहणरूपत्वात् क्षणान्तरीयग्रहणाऽनपेक्षत्वादनवस्थाया विरहात्, एकक्षणे एव वस्तुभेदरूपतत्तत्संस्थानरूपगोत्वादिग्रहादन्योन्याश्रयस्याऽप्यभावात्, शब्दानां निर्विशेषसन्मात्रग्राहित्वेन गोवृकसिंहादिबोधवैलक्षण्यं न तै स्यादत एव सविशेषपदार्थबोधकत्वम्, स्वरूपमात्रस्य स्वाऽपृथक्सिद्धाऽनन्वितदशाविरहादेव विशिष्टात्मकत्वात् स्वरूपाभिमतशब्दानामपि विशिष्टपरत्वात्, सतः अनुवर्तमानत्वादेव परमार्थत्वम्, स्वयंप्रकाशत्वस्य-जडचेतनसाधारणस्य स्वसत्तयैव स्वाश्रयाय प्रकाशमानत्वस्वरूपस्य,—धर्मधर्मिभावसाधकत्वात्, अनुभवः स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद् वस्तुनो व्यवहारानुगुण्यापादनस्वभावो ज्ञानावगतिसंविदाद्यपरनामा सकर्मकोऽनुभवितुरात्मनो धर्मविशेषो 'घटमहं जानामी'तीममर्थमवगच्छामि—'पटमहं संवेद्मी'ति सर्वेषामात्मसाक्षिकः प्रसिद्धो विशिष्टविषयकः । मुक्तावपि स आत्मा अहमर्थो विशिष्ट एव प्रकाशते, स्वस्मै विशिष्टाय प्रकाशमानत्वात्, 'अहं सर्वस्य प्रभव' इत्यादौ अहमर्थं परमात्मनः स्वरूपज्ञानरूपाऽहम्प्रत्ययस्याऽज्ञानाऽनापादकत्वेन संसारित्वाऽभावात्, देहिनः स्वाऽनज्ञानस्य

सत्यत्वम्, तद्विषयाणां पृथिव्याद्युपादानत्वाऽसत्यत्वम्, ज्ञानोपादानकत्वधर्माद्युपादानत्वसत्यत्वम्, स्वाप्नज्ञानस्य हर्षशोकाधायकज्ञानत्वात् सत्यत्वम्, मायामयज्ञानस्य सत्यत्वम्, मन्त्रौषधादिभवज्ञानस्य प्रीतिभयजनकज्ञानत्वात् सत्यत्वम्, रेखागवयात् सत्यगवयबुद्धिः सादृश्यनिबन्धना, सादृश्य सत्यम्, दोषजन्यः प्रतिभासः दोषश्चेद् बाधितस्तर्ह्यसत्यः, अबाधिता बुद्धिः सत्या, एकविज्ञानेन सर्व विज्ञान सत्यम्, विशिष्टस्य विशिष्टं विज्ञान सत्यमेव, एव च विशिष्टब्रह्माऽद्वैतज्ञान चौपनिषद मोक्षसाधनमिति ।

२०—१–'प्रज्ञान ब्रह्म'—प्रकृष्ट नित्यप्रत्यक्षात्मक ज्ञान यस्मिँस्तत् सर्वज्ञ परब्रह्म । ऋग्वेदीयैतरेयोपनिषद्वाक्यमिदम् ॥ २–'अह ब्रह्माऽस्मि'–स्थूलावस्थात्मकविशिष्टपरब्रह्मास्मि' 'अह ब्रह्मात्मा परब्रह्मणो दासोऽस्मि' । यजुर्वेदीयबृहदारण्यकोपनिषद्वाक्यमिदम् ॥ ३ ॥ 'तत् त्वमसि'--सूक्ष्मावस्थात्मविशिष्ट परब्रह्म स्थूलावस्थात्मविशिष्ट परब्रह्माऽसि' अवस्थाभेदेन द्वयोः सामानाधिकरण्य परब्रह्मण्यविरुद्धम्, शरीरशरीरिभावनिबन्धनमैक्यम् ॥ सामवेदीयच्छान्दोग्योपनिषद्वाक्यमिदम् ॥ ४ ॥—'अयमात्मा ब्रह्म'–स्थूलावस्थात्मकशरीरक परब्रह्म । अथर्ववेदीयमाण्डूक्योपनिषद्वाक्यमिदम् ॥ ५ ॥—'एष त आत्माऽन्तर्यामी अमृत.' विशिष्टः शाश्वतः परमात्मा शरीरात्मनस्तवाऽन्तर्नियामकः ॥ ६ ॥—'स यश्चाऽय पुरुषे यश्चासावादित्ये स एकः' ।—यदक्षरविशिष्ट यत्पुरुषविशिष्ट यच्चादित्यविशिष्ट परब्रह्म तदेकमेव विशिष्टमन्तर्यामीति ॥ ७ ॥—'प्रज्ञा प्रतिष्ठा प्रज्ञान ब्रह्म'—प्रकृष्ट ज्ञान यस्मिँस्तत्परब्रह्म, तत्र प्रज्ञा नित्या नित्यसार्वज्ञ्य प्रतिष्ठम् ॥ ८ ॥—'विज्ञानमानन्द ब्रह्म'—विशिष्टज्ञानवत् आनन्दवत् आनन्दघनमूर्ति परब्रह्म' ॥ ९ ॥ 'सत्य ज्ञानमनन्त ब्रह्म'—सत्स्वरूप नित्यज्ञानवत् परिच्छेदरहित परब्रह्म, निर्विकारत्वसत्तोपयोगि, नित्याऽसकुचितज्ञानैकाकारम्, स्वरूपस्वभावगुणाद्यन्तरहित परब्रह्म' ॥ १० ॥ 'स एवमेव पुरुषो ब्रह्म'—सः, विशिष्ट परब्रह्म, नित्यसुसद्गुणसाकार दिव्यशरीरि पुरुषाकार परब्रह्म' ॥ ११ ॥ 'सर्व खल्विद ब्रह्म'—एतत्सर्वपदार्थविशिष्टं परब्रह्म' ॥ १२ ॥ 'एकमेवाऽद्वितीय ब्रह्म'—एकम्–अविभक्तनामरूप कारणावस्थ परब्रह्म, एव उपादानकारणान्तरनिषेधनिश्चयार्थकः, अद्वितीय—निमित्तान्तरनिषेधवत्, परब्रह्मैवेति ॥ एकम्—असविभक्तनामरूपैकत्वावस्थापन्नजगच्छरीरकसर्वाधारसर्वशक्तिकम्, परब्रह्म, अद्वितीयम्—सर्वविश्वशरीरकाऽधिष्ठानान्तरवर्जितं परब्रह्म, एव–बहुस्यामितिबहुत्वावस्थलक्ष्यमाणकार्यव्यावृत्त परब्रह्मेति ॥ एवमन्यश्रुतीनामप्येतदनुकूलार्थपरत्व विज्ञेयम् । 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसविशन्ति तद् ब्रह्म' 'सन्मूलाः सौम्येमा. सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा.' इत्यादौ जगज्जननादिकारणत्व परब्रह्मण एव सदुपादानत्व सन्निमित्तत्व सदाधारत्वं सन्नियाम्यत्वं सच्छेषत्व च जगता प्रजाना प्रतिपादितम् । ततो विशिष्टोपासना कर्तव्येति श्रीस्वामिनारायणपरमात्मसिद्धान्तः ॥

**हरिस्वरूपज्ञानार्थमिति**—श्रीहरिः श्रीस्वामिनारायणो भगवान् परमात्मा परमेश्वरोऽक्षरातीतः परब्रह्म सर्वावतारी सर्वनियन्ता सर्वान्तर्यामी सर्वान्वयी रूपरूपप्रतिरूपी

सन्नपि व्यतिरेकी, उपनिषत्प्रतिपाद्येऽक्षरधाम्नि ब्रह्मलोके विराजमानः सर्वलोकेषु राजमानश्च सर्वदिव्यज्ञानप्रकाशघनैश्वर्यप्रकाशघनसच्चिदानन्दचेतनचैतन्यघनसगुणसाकारस्वरूपसत्सुमूर्तकिशोर-मुक्तमण्डलैर्यथावकाशयथेष्टदिव्यस्वरूपवेषावस्थानमूर्तिकैः समुपसेवितः सर्वविधालङ्काराऽऽभूषणाम्बरोपकरणतत्तत्स्वरूपचेतनमुक्तैर्विलासितो निरवधिसमौज्ज्वल्यलावण्यसौन्दर्यसौरूप्य-सौगन्ध्यसौरस्यसौपेशल्यसौशील्यसौहार्दसौघट्यसौरत्याद्यसङ्ख्यकल्याणगुणगणोर्वरितो यावद-सङ्ख्याऽऽस्वादमिष्टाकर्पणवर्षी हिरण्यश्मश्रुहिरण्यकेशाऽऽनन्दमात्रकरपादमुखोदरादिः स्नेह-सम्भृतपुण्डरीकदलनयनः सुपुष्टबलपुरागरमणदर्शनोऽतिद्योतमानो निजनिरवधिककान्तिप्रकान्ति-तस्वेतरसमस्ततत्त्वः एकरसचैतन्याऽऽनन्दघनमूर्तिदिव्यस्वरूपसत्साकारदर्शनः स्वयमत्र धर्मपुत्रो धृतदिव्यमानववेषः शाश्वतदिव्यसगुणसाकारस्वरूपः स्वेष्टदेव उपास्यमूर्तिः प्राप्यमूर्तिः सेव्य-मूर्तिरिति यदेवंविध श्रीहरेः स्वरूपस्य दिव्यसगुणसाकारताज्ञान तदर्थम्, एतादृशयथार्थ-ज्ञानफलार्थं माहात्म्यज्ञानार्थम्, अय 'स्वरूपनिर्णया'ऽऽख्यो ग्रन्थः, श्रुतीः स्मृतीश्चाऽनुसृत्य मया श्रीस्वामिनारायणभगवत्प्रसन्नतापात्रेण तस्य श्रीहरेः सेवकेन साधुना तद्दीक्षितेन तत्प्रदत्त-प्रज्ञया तज्ज्ञात्रा त्रैकालिकत्र्यवस्थाऽनुवर्तमानश्रीहरिदिव्यदर्शनकारिणा गोपालानन्दमुनिना दिव्यविदुषा रचितः, सोऽय निबन्धः स्वल्पोऽप्यनल्पविषयः श्रीविक्रमादित्यनृपतेः वेदाऽकवसु-भू ( १८९४ ) मिते वर्षे माघमासे वसन्तपञ्चम्या बुधवासरे 'स्वरूपनिर्णयो' ग्रन्थः पूर्णता गतः। अस्य पूर्णत्व मम बुद्धिसन्तोपवर्णनचरमत्वम्, यद्यप्यसन्तोषो युक्तो भागवताना भगव-त्स्वरूपवर्णनभक्तिकलापे, तथापि मूले सति तरुशाखाप्ररोहादिरवशिष्यत एवेतिवत् मूलस्थाना-पन्नमिद स्वरूपनिर्णयात्मक तदुपासन मया भगवति स्निग्धाना कृते सुसम्पादित तदेतदालम्ब्य यथाऽह तथाऽन्येऽपि विशेषतो मुहुर्धारणाध्यानोपास्ति विधास्यन्तीति तद्रसपान करिष्यन्तीति, यावत्पृथिवी स्थास्यति यावच्चार्कः समुदेति यावदयं परमात्मा स्वेष्टदेव स्वरूपज्ञानवद्भिरुपा-सनीय इति तल्लाभार्थं मयाऽस्य निर्णयः समुपबृंहित इति श्रीगोपालानन्दमुन्यभिप्रायः॥ अत्र स्वरूपनिर्णये श्रुतयः स्मृतयश्चाऽपूर्णा अपि विन्यस्तास्तास्तु यथायोग्यास्तावदुपन्यस्ता नाधिका इति नाऽपूर्णताशङ्का, भाष्यमपि तावन्मात्र यथापेक्ष निर्मितमिति तत्राऽपि नाऽपूर्णताशङ्का, अथ प्रसंगश्चेदपेक्षणीयस्तदा श्रोत्रियैस्तत्र तत्र मार्गणीय इति **'श्रीसत्संग-भाष्यं'** सत्सगफलदमस्तु॥

**दिव्यो धाम्न्यक्षरेऽत्र स्थितनरतनुधृग्दिव्यरूपोऽन्तरात्मा**<br>**दिव्या यस्याऽवतारास्तनुगुणविभवाः शक्तयो दिव्यभूषाः।**<br>**दिव्या मुक्ताः किशोरा यदुपकरणजातं च दिव्यं समग्रं**<br>**दिव्ये श्रीस्वामिनारायणभगवति सत्संगभाष्यं व्यनज्मि॥ १॥**

**सदानन्दसाकारदिव्यस्वरूपः सुमूर्तिः किशोरोऽस्य मुक्ताः किशोराः।**<br>**किशोरोऽस्य धामाऽपि दिव्या गुणाद्याः सदानन्दतेजोघनाकारमूर्ताः॥ २॥**